THE

# MUDRA RAKSHASA,

OR

THE SIGNET OF THE MINISTER,

A DRAMA,

*IN SEVEN ACTS.*

BY

VISA'KHA DATTA.

---

**With a Commentary,**

EXPLANATORY OF THE PRÁ[illegible]ES.

PUBLISHED UNDER THE AUTHORITY OF THE COMMITTEE OF
PUBLIC INSTRUCTION.

---

**Calcutta:**

PRINTED AT THE EDUCATION PRESS, CIRCULAR ROAD
SOLD AT THE DEPOSITORY, PATALDANGA.

1831.

# ॥ मुद्राराक्षसं ॥



[illegible]

विशाखदत्तविरचितं।



साधारणविद्यावृद्ध्यर्थकसमाजाधिपतीनामाज्ञया

कलिकाताराजधान्यां इडुकेशनयन्त्रालये

प्राकृतभाषाव्याख्यासहितं

मुद्रितमभूत्।



१८३१



# ॥ मुद्राराक्षसं ॥

## ॥ नाटकं ॥

---

## ॥ प्रथमोऽङ्कः ॥




### ॥ नान्दी ॥

धन्या केयं स्थिता ते शिरसि शशिकला, किन्नुनामैतदस्याः?
नामैवास्यास्तदेतत् परिचितमपि ते विस्मृतं कस्य हेतोः?
नारीं पृच्छामि नेन्दुं; कथयतु विजया; न प्रमाणं; यदिन्दु
र्देव्या निह्नोतुमिच्छोरिति सुरसरितं शाठ्यमव्याद्विभोर्व्वः।

अपि च।

पादस्याविर्भवन्तीमवनतिमवने रक्षतः स्वैरपातैः,
सङ्कोचेनैव दोष्णां मुहुरभिनयतः सर्व्वलोकातिगानां,
दृष्टिं लक्ष्येषु नोग्रां ज्वलनकणमुचं बध्नतो दाहभीते
रित्याधारानुरोधात्त्रिपुरविजयिनः पातु वो दुःखनृत्यं।

॥ नान्द्यन्ते सूत्रधारः ॥ अलमतिप्रसङ्गेन। आज्ञापितोऽस्मि परिषदा; यथा, त्वयाद्य सामन्तवटेश्वरदत्तपौत्रस्य महाराजपदभाक्पृथुसूनोः कवेर्व्विशाखदत्तस्य कृतिं मुद्राराक्षसं नाम नाटकं नाटयितव्यमिति। यत्सत्यं काव्यविशेषवेदिन्यां परि

यदि प्रयुञ्जानस्य ममापि चेतसि सुमहान्परितोषः समुद्भवति।

चीयते बालिशस्यापि सत्क्षेत्रपतिता कृषिः?

न शालेः स्तम्बकरिता वप्तुर्गुणमपेक्षते।

तद्यावदिदानीं गृहं गत्वा, गृहिणीमाहूय, गृहजनेन सह संगीतकमनुतिष्ठामि॥ परिक्रम्यावलोक्य च॥ इमे नो गृहाः; तद्यावत् प्रविशामि॥ नाट्येन प्रविश्यावलोक्य च॥ अये तत्किमिदमस्मद्गृहेषु महोत्सवः संदृश्यते? स्वकर्मण्यधिकतरमभियुक्तः परिजनः। तथाहि।

वहति जलमियं,पिनष्टि गन्धानियमियमुद्ग्रथते स्रजोविचित्राः,

मुसलमिदमियञ्च पातकाले मुहुरनुयाति कलेन हुङ्कृतेन।

भवतु; कुटुम्बिनीमाहूय पृच्छामि॥ नेपथ्याभिमुखमवलोक्य॥

गुणवत्युपायनिलये,स्थितिहेतोः, साधिके त्रिवर्गस्य,

मद्भवननीतिविद्ये, कार्य्याचार्य्ये, द्रुतमुपैहि।

॥ प्रविश्य॥ नटी। अज्ज, इअम्हि, अणाणिओएण मं अणुगेह्णदु अज्जो (१)।

सूत्र। आर्य्ये, तिष्ठतु तावदाज्ञानियोगः; कथय, किमद्य भवत्या तत्र भवतां ब्राह्मणानामुपनिमन्त्रणेन कुटुम्बकमनु

---

(१) आर्य्य, इयमस्मि, आज्ञानियोगेन मामनुगृह्णात्वार्य्यः।

गृहीतं? अभिमता वा भवनमतिथयः संप्राप्ता? यत एष पाक विशेषारम्भः।

नटी। अज्ज, उअणिमन्तिदा मए वह्मणाः (१)।

सूत्र। अथ कस्मिन्निमित्ते?

नटी। उवरज्जदि किल भअवं चन्दोत्ति (२)।

सूत्र। आर्य्ये, कएवमाह?

नटी। एवं क्खु णअरणिवासिजणो मन्तेदि (३)।

सूत्र। आर्य्ये, कृतश्रमोऽस्मि चतुःषष्ठ्यङ्गे ज्योतिःशास्त्रे, तत्प्रवर्त्त्यतां भगवतो ब्राह्मणानुद्दिश्य पाकः; चन्द्रोपरागं प्रति तु केनापि विप्रलब्धासि। पश्य।

क्रूरग्रहः सकेतुश्चन्द्रं संपूर्णमण्डलमिदानीं, अभिभवितु मिच्छति बलात् इत्यर्द्धोक्ते।

नेपथ्ये। आः; क एष मयि स्थिते चन्द्रगुप्तमभिभवितु मिच्छति बलात्?

सूत्र। रक्षत्येनन्तु बुधयोगः।

नटी। अज्ज, को उण एसो धरणिगोअरो भविअ, चन्दं गहाभिजोआदो रक्खिदुं इच्छदि? (४)

---

(१) आर्य्य, उपनिमन्त्रिता मया ब्राह्मणाः।

(२) उपरज्यते किल भगवान् चन्द्र इति।

(३ एवं खलु नगरनिवासिजनो मन्त्रयति।

(४) आर्य्य, कः पुनरेष धरणिगोचरो भूत्वा, चन्द्रं ग्रहा भियोगात् रक्षितुमिच्छति?

सूत्र। आर्य्ये, यत् सत्यं मयापि नोपलक्षितः। भवतु, भूयोऽभियुक्तः स्वरव्यक्तिमुपलप्स्ये ॥ पुनस्तदेव पठति ॥

नेपथ्ये। आः कएष मयि स्थिते चन्द्रगुप्तमभिभवितुमिच्छति।

सूत्र ॥ आकर्ण्य ॥ आर्य्ये, ज्ञातं; कौटिल्यः।

॥ नटी भयं नाटयति ॥

सूत्र। कौटिल्यः कुटिलमतिः; स एष, येन

क्रोधाग्नौ प्रसभमदाहि नन्दवंशः;
चन्द्रस्य ग्रहणमिति श्रुतेः सनाम्नो,
मौर्य्येन्दोर्द्विषदभियोगइत्यवैति।

भवत्वावां गच्छावः॥ इति निष्क्रान्तौ ॥ प्रस्तावना ॥

॥ ततः प्रविशति मुक्तां शिखां परामृशन् सकोपश्चाणक्यः॥

चाणक्यः। कथय, कएष मयि स्थिते चन्द्रगुप्तमभिभवितुमिच्छति बलात्। पश्य।

नन्दकुलकालभुजङ्गीं कोपानलबहलनीलधूमलतां,
अद्यापि बध्यमानां, बध्यः को नेच्छति शिखां मे।

अपिच।

उल्लङ्घयन्मम समुज्ज्वलतः प्रतापं
कोपस्य; नन्दकुलकाननधूमकेतोः,

सद्यः परात्मपरिमाणविवेकमूढः,

कः शलभेन विधिना लभतां विनाशं?

शार्ङ्गरव, शार्ङ्गरव;

॥ प्रविश्य ॥ शिष्यः। उपाध्याय, आज्ञापय।

चाण। वत्स, उपवेष्टुमिच्छामि।

शिष्यः। उपाध्याय, नन्वियं सन्निहितवेत्रासनैव द्वारप्रकोष्ठ शाला, तस्यामुपवेष्टुमर्हत्युपाध्यायः।

चाण। वत्स, कार्य्याभियोग एवास्मानाकुलयति न पुन रुपाध्यायसहभूः शिष्यजने दुःशीलता ॥ नाट्येनोपविश्यात्मगतं॥ कथं प्रकाशतां गतोऽयमर्थः पौरेषु। यथा, किल नन्दकुल विनाशजनितरोषो राक्षसः,पितृबधामर्षितेन सकलनन्दराज्य परिपणनप्रोत्साहितेन पर्व्वतकपुत्त्रेण मलयकेतुना सह सन्धाय, तदुपगृहीतेन च महता म्लेच्छराजेन परिवृतो, वृषलमभि योक्तुमुद्यत इति ॥ विचिन्त्य ॥ अथवा, येन, मया सर्व्वलोक प्रकाशं नन्दबधं प्रतिज्ञाय निस्तीर्णा, दुस्तरा प्रतिज्ञासरित्, सोऽहमिदानीं प्रकाशीभवन्तमप्येनमर्थमसमर्थः प्रशमयितु मिति। कुत एतत्। यस्य मम,

श्यामीकृत्याननेन्दूनरियुवतिदिशां सन्ततैः शोकधूमैः;

कामं मन्त्रिद्रुमेभ्यो नयपवनहृतं मोहभस्म प्रकीर्य्य;

दग्ध्वा सम्भ्रान्तपौरद्विजगणरहितान्नन्दवंशप्ररोहा

न्दाह्याभावान्न खेदाज्ज्वलन इव वने, शाम्यति क्रोधवह्निः।

अपिच।

शोचन्तोऽवनतैर्नराधिपभयाद्धिक्शब्दगर्भैर्मुखै

र्मामयासनतोऽवकृष्टमवशं ये दृष्टवन्तः पुरा,

ते पश्यन्तु तथैव संप्रति, जना, नन्दं, मया, सान्वयं

सिंहेनेव गजेन्द्रमद्रिशिखरात्सिंहासनात्पातितं।

सोऽहमिदानीमवसितप्रतिज्ञाभारोऽपि वृषलापेक्षया शस्त्रं धारयामि। येन, हि मया,

समुत्खाता नन्दा नव, हृदयरोगा इव भुवः,

कृता मौर्य्ये लक्ष्मीः, सरसि नलिनीव स्थिरपदा;

द्वयोः सारं तुल्यं, द्वितयमभियुक्तेन मनसा

फलं, कोपप्रीत्योर्द्विषति च विभक्तं सुहृदि च।

अथवा, ऽगृहीते राक्षसे, किमुत्खातं नन्दवंशस्य, किं वास्थैर्य्य मुत्पादितं चन्द्रगुप्तलक्ष्म्याः॥ विचिन्त्य॥ अहो, राक्षसस्य नन्द वंशे निरतिशयो भक्तिगुणः; स खलु, कस्मिंश्चिदपि जीवति नन्दा न्वयावयवे, वृषलस्य साचिव्यं ग्राहयितुं न शक्यते। तदभियोगं प्रति, निरुद्योगैरस्माभिरवस्थातुमयुक्तमित्यनयेव बुद्ध्या, तपोवनगतोऽपि घातितस्तपस्वी नन्दवंशीयः सर्व्वार्थसिद्धिः, यावदसौ मलयकेतुमङ्गीकृत्यास्मदुच्छेदाय विपुलतरं प्रयत्न मुपदर्शयत्येव॥ प्रत्यक्षवदाकाशे लक्ष्यं बध्वा॥ साधु, अमात्य राक्षस, साधु; साधु, मन्त्रिश्रोत्रिय साधु; साधु, मन्त्रिबृहस्पते. साधु? कुतः

ऐश्वर्य्यादनपेतमीश्वरमयं लोको ऽर्थतः सेवते;
तं गच्छन्त्यनु ये विपत्तिषु पुनस्ते तत्प्रतिष्ठाशयाः;
भर्त्तुर्ये प्रलयेऽपि पूर्व्वसुकृतासङ्गेन, निःसङ्गया
भक्त्या, कार्य्यधुरं वहन्ति कृतिनस्ते दुर्लभास्त्वादृशाः।

अतएवास्माकं त्वत्संग्रहे प्रयत्नः; कथमसौ वृषलस्य साचिव्य ग्रहणेन सानुग्रहः स्यादिति। कुतः?

अप्राज्ञेन च, कातरेण च, गुणः स्यात् सानुरागेण कः?
प्रज्ञाविक्रमशालिनोऽपि हि भवेत्, किं भक्तिहीनात् फलं?
प्रज्ञाविक्रमभक्तयः समुदिता येषां गुणा भूतये,
ते भृत्या नृपतेः, कलचमितरे, सम्पत्सु चापत्सु च।

तन्मयाप्यस्मिन्वस्तुनि किं संशयानेन स्थीयते यथाशक्ति क्रियते तद्ग्रहणं प्रति यत्नः। कथमिति। अत्र तावद्वृषलपर्व्वतकयोरन्यतरविनाशेनापि; चाणक्यस्यापकृतं भवतीति; विषकन्यया राक्षसेनास्माकमत्यन्तोपकारी,मित्रं घातितस्तपस्वी पर्व्वतेश्वर, इति सञ्चारितो जगति जनापवादः। लोकप्रत्ययार्थमस्यैवार्थस्य सिद्धय,पिता ते चाणक्येन घातित इति रहसि त्रासयित्वा, भागुरायणेनापवाहितः पर्व्वतकपुत्त्रो मलयकेतुः, शक्यः खल्वेष राक्षसमतिपरिगृहीतोऽपि व्युत्तिष्ठमानो बुद्ध्या निवारयितुं। न पुनरस्य निग्रहात् पर्व्वतकवधोत्पन्नमयशः प्रकाशीभवत्प्रमा

ष्टुमलमिति। प्रयुक्ताश्च मया स्वपरपक्षयोरनुरक्तापरक्तज नजिज्ञासया बहुविधदेशभाषावेशाचारवेदिनो नानाव्यञ्जनाः प्रणिधयः। अन्विष्यन्ते च कुसुमपुरनिवासिनां नन्दामात्यसुहृदां निपुणतरप्रचारगतयः। तत्तत्कारणमुत्पाद्य कृतकृत्यतामापादिताश्चन्द्रगुप्तसहोत्थायिनो भद्रभटप्रभृतयः प्रधानपुरुषाः। शत्रुप्रयुक्तानाञ्च तीक्ष्णरसदायिनां प्रतिविधानं प्रत्यप्रमादिनः परीक्षितभक्तयः क्षितिपतिप्रत्यासन्नाः नियुक्ता स्तत्राप्तपुरुषाः। अस्ति चास्माकं सहाध्यायि मित्र विष्णुशर्म्मा नाम ब्राह्मणः, शौशनस्यां दण्डनीतौ, चतुःषष्ठ्यङ्गे ज्योतिः शास्त्रे च, परं प्रावीण्यमुपगतः। स च मया क्षपणकलिङ्गधारी, नन्दवधप्रतिज्ञानन्तरमेव कुसुमपुरमुपनीय, सर्व्वनन्दामात्यैः सह सख्यं ग्राहयितो, विशेषतश्च तस्मिन्राक्षसः समुत्पन्नविस्रम्भ स्तेनेदानीं महत्प्रयोजनमनुष्ठेयं भविष्यति। तदेवमस्मत्तो न किञ्चित् परिहास्यते। वृषल एव केवलं प्रधानप्रकृतिर स्मास्वारोपितराज्यतन्त्रभारः सततमुदास्ते। अथवा यत् स्वयमभियोगदुःखैरसाधारणैरपाकृतं, तदेव राज्यं सुखयति।

कुतः। स्वयमाहृत्य भुञ्जाना बलिनोऽपि स्वभावतः,
गजेन्द्राश्च, नरेन्द्राश्च, प्रायः सीदन्ति दुःखिताः

॥ ततः प्रविशति सह यमपटेन चरः ॥

पणमह जमस्स चलणे, किं कज्जं देवेहिं अस्सेहिं ;

एसो क्खु अस्सभत्ताणं हरइ जीअं धडफडन्तं।

अविअ।

पुरिसस्स जीविदव्वं विसमादो होइ भत्तिगहिआदो,

मारेइ सव्वलोअं जो, तेण जमेण जीआमो।

ता एदं गेहं पविसिअ, जमपडअं दंसअंतो गीआमि (१)।

॥ इति परिक्रामति ॥

शिष्यः ॥ विलोक्य ॥ भद्र, न प्रवेष्टव्यं।

चरः। हंहो बह्मणा, कस्स एदं गेहं? (२)

शिष्यः। अस्माकमुपाध्यायस्य सुगृहीतनाम्न आर्य्यचाणक्यस्य।

चरः ॥ विहस्य ॥ हंहो बह्मणा, अत्तणोज्जेव्व केरअस्स धम्मभादुअस्स घरं होदि, ता देहि मे पवेसं, जाव दे उवज्झाअस्स धम्मं उवदिसामि (३)।

---

(१) प्रणमत यमस्य चरणौ, किं कार्य्यं दवतैरन्यैः ;

एष खल्वन्यभक्तानां हरति जीवितमतिचञ्चलं।

पुरुषस्य जीवितव्यं विषमादपि भवति भक्तिगृहीतात्,

मारयति सर्व्वलोकं यस्तेन यमेन जीवामः।

तस्मादिदं गृहं प्रविश्य, यमपटं दर्शयन् गायामि।

(२) अहो ब्राह्मण, कस्येदं गृहं?

(३) अहो ब्राह्मण, आत्मीयस्यैव धर्म्मभ्रातुर्गृहमिदं, तस्माद्देहि मे प्रवेशं, यावत्तवोपाध्यायस्य धर्म्ममुपदिशामि।

शिष्यः ॥ सक्रोधं ॥ धिक् मूर्ख, किं भवानस्मदुपाध्यायादपि धर्म्मवित्तमः।

चरः। हंहो बह्मणा, मा कुप्य ; णहि सव्वो सव्वं जाणादि; ता किंचिं ते उवज्झाश्रो जाणादि, किंचि श्रह्मारिसा जाणन्ति (१)।

शिष्यः ॥ सक्रोधं॥ मूर्ख, सर्व्वज्ञतामुपाध्यायस्य चोरयसि।

चरः। हंहो बह्मणा, जइ तव उवज्झाश्रो सव्वं जाणादि, जाणादु दाव कस्स चन्दो श्रणभिमदोत्ति (२)।

शिष्यः। मूर्ख, किमनेन ज्ञातेन वा गुरोर्भविष्यति?।

चरः। हंहो-बह्मणा, तुश्च उवज्झाश्रो ज्जेव्व जाणिस्सदि जं इमिणा जाणिदेन भोदि, उजुश्रबुद्धिश्रा तुश्रं दाव एत्तिश्रं जाणासि, मलाणं चन्दो श्रणभिमदोत्ति। णं पेक्ख, कमलाणं

---

(१) अहो ब्राह्मण, मा कुप्य; नहि सर्व्वः सर्व्वं जानाति; तत्किञ्चित्ते उपाध्यायो जानाति, किञ्चित् अस्मादृशा अपि जानन्ति।

(२) अहो ब्राह्मण, यदि तवोपाध्यायः सर्व्वं जानाति, जानातु तावत्कस्य चन्द्रोऽनभिमतोऽस्ति।

मणोहराणंवि रूआदो विसंवअद्र सीलं संपुस्समंडलम्मिवि जाइं चन्दे विरुद्धाइं (१)।

चाण ॥ आकर्ण्यात्मगतं ॥ अये, चन्द्रगुप्तादपरक्तान् पुरुषान् जानामीत्युपक्षिप्तमनेन।

शिष्यः। मूर्ख, किमिदमसंबद्धमेवमभिधीयते।

चरः। हंहो बह्मणा, सुसंबद्धं ज्जेब्ब एदं भवे (२)।

शिष्यः। यदि किं स्यात्।

चरः। जद सुणन्तं जाणन्तं अ जणं लहे (३)।

चाण ॥ विलोक्य ॥ भद्र, सुखं प्रविश, लप्स्यसे श्रोतारं ज्ञातारञ्च।

चरः। एसो प्पविसामि ॥ प्रविश्योपसृत्य ॥ जेदु, जेदु, अज्जो (४)।

चाण ॥ विलोक्यात्मगतं ॥ कथं, प्रभूतत्वात् कार्य्याणां कस्य

---

(१) अहो ब्राह्मण, तवोपाध्याय एव ज्ञास्यति यदेतेन ज्ञातेनभवति, ऋजुबुद्धिस्त्वं तावदेतावत् जानासि, कमलानां चन्द्रोऽनभिमत इति। ननु पश्य, कमलानां मनोहराणामपि रूपादिसम्वदति शीलं सम्पूर्णमण्डलेऽपि यानि चन्द्रे विरुद्धानि।

(२) अहो ब्राह्मण, सुसम्बद्धमेवेदं भवेत्।

(३) यदि शृण्वन्तं जानन्तञ्च जनं लभे।

(४) एष प्रविशामि। जयतु, जयतु, आर्य्यः।

परिज्ञाने नियुक्तो निपुणक इति न ज्ञायते। आं ज्ञातं, अये; कथ मयं प्रकृतिचित्तपरिज्ञाने नियुक्तो निपुणकः ॥ प्रकाशं ॥ भद्र स्वागतमुपविश्यतां।

चरः। जं अज्जो आणवेदित्ति ॥ भूमावुपविशति (१)

चाण। भद्र, उपवर्णयेदानीं स्वनियोगवृत्तान्तं। अपि वृष लमनुरक्ताः प्रकृतयः?

चरः। अधइं? अज्जेण क्खु तेसु तेसु विराअकारणेसु परि हरितेसु सुगृहीदनामधेए देए चन्दउत्ते दिढं अणुरत्ताओ पइदिओ। किंउण सन्ति एत्थ णअरे अमच्चरक्खसस्स पढम समुप्पणसिणेहवज्ढमाणा तिण्णि पुरिसा, जे देअस्स चन्दसिरिणो सिरिं ण संहन्ति (२)।

चाण ॥ सक्रोधं ॥ ननु वक्तव्यं स्वजीवितं न सहन्त इति, भद्र; अपि ज्ञायन्ते नामधेयतः?

---

(१) यद्दैव आज्ञापयतीति।

(२) अथकिं? आर्य्येण खलु तेषु तेषु विरागकारणेषु परिह्रियमाणेषु सुगृहीतनामधेये देवे चन्द्रगुप्ते दृढमनुरक्ताः प्रकृतयः किं पुनः सन्त्यत्र नगरे अमात्यराक्षसेन सह प्रथम समुत्पन्नस्नेहवर्द्धमानास्त्रयः। पुरुषाः ये देवस्य चन्द्रश्रियः श्रियं न सहन्ते।

चरः। कधं असुणिदणामधेया अज्जस्स णिवेदीअन्ति (१)।

चाण। तेन हि श्रोतुमिच्छामि।

चरः। सुणादु अज्जो; पढमं दाव अज्जस्स रिपुपक्खे बद्धपक्खवादो कखवणओ (२)।

चाण॥ सहर्षमात्मगतं॥ अस्मद्रिपुपक्षे बद्धपक्षपातः क्षपणकः॥ प्रकाशं॥ किंनामधेयो हि सः?

चरः। जीवसिद्धी नाम।

चाण। अस्मद्रिपुपक्षे बद्धपक्षपातः क्षपणकइति कथमवगतं भवता?

चरः। जेण सा अमचरक्खसस्स पउत्ता विसकस्रआ देवे पव्वदेसरे समावेसिदा (३)।

चाण॥ स्वगतं॥ जीवसिद्धिरेष तावदस्मत्प्रणिधिः॥प्रकाशं॥ भद्र, तत्तथा अपरः कः?

---

(१) कथमश्रुतनामधेया आर्य्यस्य निवेद्यन्ते।

(२) शृणोत्वार्य्यः; प्रथमं तावद्रिपुपक्षे बद्धपक्षपातः क्षपणकः।

(३) येन सा अमात्यराक्षसप्रयुक्ता विषकन्या देवे पर्व्वतकेश्वरे समावेशिता।

चरः। अज्ज अवरो क्खु अमच्चरक्खसस्स पिअवअस्सो काअत्थे सअडदासो नाम (१)।

चाण ॥ विहस्यात्मगतं॥ कायस्थइति लघ्वी मात्रा। तथापि न युक्तं प्राकृतमपि रिपुमवज्ञातुं। तस्मिन्मया सुहृच्छ्छ्मना सिद्धार्थको निक्षिप्तः॥प्रकाशं॥ भद्र,तृतीयं श्रोतुमिच्छामि।

चरः॥ विहस्य॥ तदिओवि अमच्चरक्खसस्स दुदीअंविअ हिअअं,पुप्फउरवासी,मणिआरसेट्ठी;चन्दनदासोनाम,जस्स गेहे कलत्तं न्यासीकदुअ अमच्चरक्खसो णअरादो अवकन्तो (२)।

चाण ॥ आत्मगतं॥ नूनं सुहृत्तमः। नह्यनात्मसदृशेषु राक्षसः कलत्रं न्यासीकरिष्यति ॥ प्रकाशं ॥ भद्र, चन्दनदासस्य गृहे राक्षसेन कलत्रं न्यासीकृतमिति कथमवगम्यते भवता?

चरः। अज्ज, इअं अंगुलीअमुद्दा अज्जं अवगदत्थं करिस्सदि (३)॥ इति मुद्रामर्पयति॥

---

(१) आर्य्य अपरः खलु अमात्यराक्षसस्य प्रियवयस्यः कायस्थः शकटदासो नाम।

(२) तृतीयोऽप्यमात्यराक्षसस्य द्वितीयमिव हृदयं, पुष्पपुरनिवासी, मणिकारश्रेष्ठी, चन्दनदासो नाम, यस्य गेहे कलत्रं न्यासीकृत्य अमात्यराक्षसो नगरादपक्रान्तः।

(३) आर्य्य इयमङ्गुलिमुद्रा आर्य्यमवगतार्थं करिष्यति।

चाण॥ मुद्रामवलोक्य गृहीत्वा, वाचयति नाम राक्षसस्य; सहर्षं, स्वगतं॥ ननु राक्षसएवास्मदङ्गुलिप्रणयी संवृत्त इति ॥ प्रकाशं॥ भद्र, अङ्गुलिमुद्राधिगमं प्रकाशेन श्रोतुमिच्छामि।

चरः। सुणादु अज्जो; अत्थि दाव अहं अज्जेण पउरजणचरिददंसणे णिउत्तो, तदो परघरप्पवेसे परस्स अणासंकणीयेण, इमिणा जमपडेणाहिंडन्तो, मणिआरसेट्ठिचन्दणदासस्स घरं पविट्ठोह्मि; तहिं जमपडअं पसारिअ, पउत्तोह्मि गीदाइं गाइदुं (१)।

चाण। ततस्ततः?

चरः। तदो, एक्कादो ओवरकादो, पञ्चवरिसदेसीओ पिअदंसणोअसरीराकिदी कुमारओ, बालजणसुलहकोदूहलोप्फुल्लणअणजुअलओ णिक्कमिदुं पउत्तो; तदो, हा णिग्गदो, हा णिग्गदोत्ति, संकापरिग्गाहं णिवेदअन्तस्स णिअरगरुओ, तस्स ज्जेव्व ओवरकस्स अब्भंतरे, इत्थीजणस्स उत्थिदो महंतो कल

---

(१) शृणोत्वार्य्यः; अस्ति तावदहमार्य्येण पुरजनचरित्रदर्शने नियुक्तः, परगृहप्रवेशे परस्यानाशङ्कनीयेन अमुना यमपटेन आहिण्डमानो, मणिकारश्रेष्ठिचन्दनदासस्य गृहं प्रविष्टोऽस्मि; तत्र यमपटं प्रसार्य्य प्रवृत्तोऽस्मि गीतानि गातुं।

अलो। तदो इमि दुआरदेसदाविदमुहीए एक्काए इत्थिआए, सो कुमारओ णिक्कमन्तोव्वेव्व णिभच्छिअ अवलम्बिदे कोमलाए वाऊलदाए; तस्साअ कुमारसंरोहसंभमप्पचलिदंगुलिदो करादो पुरिसंगुलिपरिणाहप्पमाणघडिआ विअलिदा इअं अङ्गुलीमुद्दीआ देहलीबंधम्मि णिपडिआ; ताए अणवबुद्धव्वेव, मम चलनपासं समागच्छिअ, पणामणिऊआ कुलवहू विअ णिच्चला संवुत्ता; मएवि अमच्चरक्खसस्स णामंकिदेति अज्जस्स पादमूलं पाविदा, ता एसो इमाए मुद्दाए आगमोत्ति (१)।

---

(१) ततश्च एकस्मादावरकात् पञ्चवर्षदेशीयःप्रियदर्शनीय, शरीराकृतिः कुमारो, बालजनसुलभकौतुकोत्फुल्लनयनयगलो निष्क्रमितुं प्रवृत्तः; ततो, हा निर्गतो, हा निर्गतइति, शङ्कापरियहं निवेदयतएवावरकाभ्यन्तरे, स्त्रीजनस्योत्थितो महान् कलकलः। तत ईषद्द्वारदेशदापितमुख्या एकया स्त्रिया स कुमारको निष्क्रामन्नेव निर्भत्स्यावलम्बितः कोमलया वाऊलतया, तस्याश्च कुमारसंरोधसंभ्रमप्रचलिताङ्गुलेः करात्पुरुषाङ्गुलिपरिणाहप्रमाणघटिता विगलितेयमङ्गुलिमुद्रिका देहलीबन्धे निपतिता;तया अनवबुद्धा एव, मम चरणपार्श्वं समागत्य, प्रणामनिभृता कुलवधूरिव निश्चला संवृत्ता, मयापि अमात्यराक्षसस्य नामाङ्कितेति आर्य्यस्य पादमूलं प्रापिता, तस्मादेषोऽस्य आगमः।

चाण। भद्र, श्रुतं; अपसर। न चिरादस्य परिश्रमस्यानुरूपं फलमधिगमिष्यसि।

चरः। जं अज्जो आणवेदित्ति ॥ निष्क्रान्तः (१)॥

चाण। शार्ङ्गरव, शार्ङ्गरव।

॥ प्रविश्य ॥ शिष्यः। उपाध्याय आज्ञापय।

चाण। वत्स मसीभाजनं पत्रञ्चोपानय।

शिष्यः। यदाज्ञापयत्युपाध्याय इति ॥ निष्क्रम्य पुनः प्रविश्य ॥ उपाध्याय, इदं मसीभाजनं पत्रञ्च।

चाण ॥ गृहीत्वा स्वगतं॥ किमत्राभिलिखामि। अनेन खलु लेखेन राक्षसो जेतव्यः।

॥ ततः प्रविश्य ॥ प्रतीहारी। जेदु, जेदु, अज्जो (२)।

चाण ॥ सहर्षमात्मगतं ॥ गृहीतोऽयं जयशब्दः ॥ प्रकाशं ॥ शोणोत्तरे, किमागमनप्रयोजनं।

प्रती। अज्ज, कमलमुउलाआरमञ्जलिं सीसे णिवेसिअ देवो चन्दसिरी अज्जं विण्णवेदि। इच्छामि अहं, अज्जेण अणुण्णादो, पारलोइअं कादुं देवस्स पव्वदीसरस्स; तेण अ, धारिदपुव्वाइं आभरणाइं गुणवन्ताणं बम्हणाणं पडिवादेमित्ति (३)।

---

(१) यदार्य्य आज्ञापयति।

(२) जयतु, जयत्वार्य्यः।

(३) आर्य्य देव चन्द्रश्रीः शीर्षे कमलमुकुलाकारमञ्जलिं

चाण ॥ सहर्षमात्मगतं ॥ साधु, वृषल, साधु; ममैव हृदयेन सह सम्मन्त्र्य सन्दिष्टवानसि ॥ प्रकाशं ॥ शोणोत्तरे, उच्यतामस्मद्वचनाद्वृषलः, साधु, वत्स, साधु, अभिज्ञः खल्वसि लोकव्यवहाराणां तदनुष्ठीयतामात्मनोऽभिप्रायः; किन्तु पर्व्वतेश्वरधृतपूर्व्वाणि भूषणानि गुणवन्ति गुणवद्भ्य एव ब्राह्मणेभ्यः प्रतिपादनीयानि, तदेषोऽहं स्वयं परीक्षितगुणान् ब्राह्मणान् प्रेषयामि।

प्रती। जं अज्जो आणवेदित्ति ॥ निष्क्रान्ता ॥

चाण। शार्ङ्गरव, शार्ङ्गरव, उच्यतामस्मद्वचनाद्विश्वावसुप्रभृतयस्त्रयो भ्रातरः, यथा वृषलात्प्रतिगृह्याभरणानि भवद्भिरहं द्रष्टव्य इति।

शिष्यः। यदाज्ञापयत्युपाध्याय इति ॥ निष्क्रान्तः ॥

चाण ॥ स्वगतं ॥ उत्तरोऽयं लेखार्थः पूर्व्वः कतमोऽस्तु ॥ विचिन्त्य ॥ आं ज्ञात, उपलब्धवानस्मि प्रणिधिभ्यो, यथा तस्य म्लेच्छराजबलस्य मध्यात् प्रधानतमाः पञ्च राजानः परया भक्त्या राक्षसमनुवर्त्तन्ते। तद्यथा;

कौलूतश्चित्रवर्म्मा, मलयनरपतिः सिंहनादो नृसिंहः,
काश्मीरः पुष्कराक्षः, क्षतरिपुमहिमा सैन्धवः सिन्धुषेणः,

---

निवेश्य देवश्चन्द्रश्रीरार्य्यं विज्ञापयति। इच्छाम्यार्य्येणाभ्यनुज्ञातो, देवस्य पर्व्वतेश्वरस्य पारलौकिकं कारयितुं, तेन च धारितपूर्व्वाणि आभरणानि गुणवद्भ्यो ब्राह्मणेभ्यः प्रतिपादयामीति।

मेघाक्षः पञ्चमोऽस्मिन् पृथुतुरगबलः पारसीकाधिराजो;
नामान्येषां लिखामि ध्रुवमहमधुना, चित्रगुप्तः प्रमाष्टुं।
॥ विचिन्त्य ॥ अथवा न लिखामि; सर्व्वमनभिव्यक्तमेवास्तां
॥ प्रकाशं ॥ शार्ङ्गरव, शार्ङ्गरव।

॥ प्रविश्य ॥ शिष्यः। उपाध्याय, आज्ञापय।

चाण। वत्स, श्रोत्रियाक्षराणि प्रयत्नेन लिखितान्यपि नियतमस्फुटानि भवन्ति; तदुच्यतामस्मद्वचनात् सिद्धार्थकः ॥ कर्णे कथयति ॥ एभिरक्षरैः केनापि, किमपि, कस्यापि, स्वयं वाच्यमिति; अदत्तवाह्यनामानं लेखं शकटदासेन लेखयित्वा, मामुपतिष्ठस्व; न चाख्येयमस्मै चाणक्यो लेखयतीति।

शिष्यः। यदाज्ञापयत्युपाध्याय इति ॥ निष्क्रान्तः ॥

चाण ॥ स्वगतं ॥ हन्त जितो मलयकेतुः।

॥ प्रविश्य ॥ लेखहस्तः सिद्धार्थकः। जअदु, जअदु, अज्जो; अज्ज अअं सो सअडदासेण लिहिदो लेहो मम वअणेण अविचालिअ (१)।

चाण॥ गृहीत्वा निरीक्ष्य॥ अहो दर्शनीयताक्षराणां ॥ इत्यनुवाच्य ॥ भद्र, अनया मुद्रया मुद्रयैनं।

---

(१) जयतु जयत्वार्य्यः; आर्य्य शकटदासेन लेखितो लेखः मम वचनेनाविचार्य्य।

सिद्धा। जं अज्जो आणवेदित्ति ॥ तथा कृत्वा ॥ अज्ज, अअं सो मुद्दिदो लेहो; ता आणवेदु अज्जो किं अवरं अणुचिट्ठीअदुत्ति (१)।

चाण। भद्र, कस्मिंश्चिदात्मजनानुष्ठेये कर्मणि त्वां व्यापारयितुमिच्छामि।

सिद्धा॥ सहर्षं॥ अज्ज अणुग्गहिदोह्मि; ता आणवेदु अज्जो, किं इमिणा दासजणेण अज्जस्स अणुचिट्ठिदव्वं (२)।

चाण। भद्र, प्रथमं तावद्वध्यस्थानं गत्वा, घातकाः सरोषं दक्षिणाक्षिसङ्कोचसंज्ञां ग्राहितव्यास्ततस्तेषु गृहीतसंज्ञेषु भयापदेशादितस्ततः प्रद्रुतेषु, शकटदासो वध्यस्थानादपनीय, राक्षसं प्रापयितव्यः; तस्माच्च सुहृत्प्राणरक्षणपरितुष्टात्पारितोषिकं ग्राह्यं; राक्षसएव वा कञ्चित्कालं सेवितव्यः; ततः प्रत्यासन्नेषु परेषु त्वया प्रयोजनमिदमनुष्ठेयं॥ कर्णे एवमेवं॥

सिद्धा। जं अज्जो आणवेदित्ति।

चाण। शार्ङ्गरव, शार्ङ्ग। रव।

॥ प्रविश्य ॥ शिष्यः। उपाध्याय आज्ञापय।

---

(१) आर्य्यायं स मुद्रितो लेखः, तस्मादाज्ञापयत्वार्य्यः किमपरमनुष्ठीयतां।

(२) अनुगृहीतोऽस्मि; तदाज्ञापयत्वार्य्यः, किमनेन दासजनेनार्य्यस्यानुष्ठातव्यं।

चाण। उच्यतां मद्वचनात् कालपाशिको, दण्डपाशिकश्च, यथा वृषलः समाज्ञापयति, यएष क्षपणको जीवसिद्धि र्नाम, राक्षसप्रयुक्तो, विषकन्यया पर्व्वतेश्वरं घातितवान्। स एनमेव दोषं प्रख्याप्य, सनिकारं नगरान्निर्व्वास्यतामिति।

शिष्यः। यदाज्ञापत्युपाध्याय॥ इति परिक्रामति॥

चाण। वत्स, तिष्ठ, तिष्ठ; योऽयमपरः कायस्थः शकट दासो नाम, राक्षसप्रयुक्तो, नित्यमस्मच्छरीरमभिद्रोग्धुमिच्छ प्रयतते; स चाप्येनं दोषं प्रख्याप्य, शूलमारोप्यतां, गृहजनश्चास्य बन्धनागारे प्रवेश्यतामिति।

शिष्यः। यदाज्ञापयत्युपाध्याय इति॥ निष्क्रान्तः॥

चाण॥ चिन्तां नाटयित्वा स्वगतं॥ अपि नाम दुरात्मा राक्षसो गृह्येत।

सिद्धा। अज्ज गहीदो (१)।

चाण॥ सहर्षमात्मगतं॥ हन्त गृहीतो राक्षसः॥ प्रकाशं॥ भद्र; कोऽयं गृहीतः।

सिद्धा। गहीदो मए अज्जस्स सन्देसो, ता गमिस्सं अहं कज्जसिद्धीए (२)।

---

(१) आर्य्य गृहीतः।

(२) गृहीत आर्य्यसन्देशो मया, तस्माद्गमिष्यामि कार्य्यं सिद्धौ।

चाण॥ साङ्गुलिमुद्रं लेखमर्पयित्वा॥ भद्र, सिद्धार्थक, गम्यतां, अस्तु ते कार्य्यसिद्धिः।

सिद्धा। जं अज्जो आणवेदित्ति॥ प्रणम्य निष्क्रान्तः॥

॥ प्रविश्य॥ शिष्यः। उपाध्याय, कालपाशिको, दण्डपाशिकश्च, उपाध्यायं विज्ञापयतः। इदमनुष्ठीयते देवस्य चन्द्रगुप्तस्य शासनमिति।

चाण। शोभनं, वत्स, मणिकारश्रेष्ठिनं चन्दनदासमिदानीं द्रष्टुमिच्छामि।

शिष्यः। यदाज्ञापयत्युपाध्याय इति॥ निष्क्रम्य चन्दनदासेन सह पुनः प्रविश्य॥ इत, इतः, श्रेष्ठिन्।

चन्दनदासः॥ स्वगतं॥ चाणक्कम्मि अकरुणे, सहसा सद्दाविदस्स लोअस्स वहदि णिद्दोसस्सवि सङ्का, किं उण मम जातदोसस्स? ता भणिदा मए धणसेणप्पमुहा तिण्णि वाणिजिआ, जधा कदाइ चाणक्कहदओ गेहं मे विचिणावेदि, ता अवहिदा णिव्वहध भट्टिणो अमच्चरक्खसस्स घरअणं; मह दाव जं होदि, तं होदुत्ति (१)।

---

(१) चाणक्ये अकरुणे सहसा शब्दायितस्यापि लोकस्य निर्दोषस्य वर्त्तते शङ्का, किं पुनर्म्मम जातदोषस्य? तस्माद्भणिता मया धनसेनप्रमुखास्त्रयो वाणिजिकाः, यथा कदाचिच्चाणक्यहतको गेहं मे विचिनोति तस्मादवहिता निर्व्वहत भर्त्तुरमात्यराक्षसस्य गृहजनं; मम तावत् यद्भवति तद्भवतु।

शिष्यः। भोः श्रेष्ठिन्नित इतः।

चन्द। अअमागदोह्मि ॥ उभौ परिक्रामतः (१)॥

शिष्यः। उपाध्याय। अयं श्रेष्ठी चन्दनदासः,

चन्द ॥ उपसृत्य ॥ जअदु, जअदु, अज्जो।

चाण ॥ नाट्येनावलोक्य॥ भो श्रेष्ठिन्, स्वागतमिदमासन मास्यतां।

चन्द ॥ प्रणम्य ॥ किं ण जाणादि अज्जो, जहा अणुचिदो उअआरो सहिअअस्स परिहवादोवि महन्तं दुःखमुप्पादेदि; ता इहज्जेव अहं उचिदाए भूमीए उवविसामि (२)।

चाण। भोः श्रेष्ठिन्, मा मैवं, उचितमेवैतदस्मद्विधैः सह भव तस्तदुपविश्यतामासनएव।

चन्द ॥ स्वगतं ॥ उवलक्खितमणेण किम्पि?॥ प्रकाशं ॥ जं अज्जो आणवेदित्ति ॥ उपविष्टः (३)॥

चाण। भोः श्रेष्ठिन् चन्दनदास, अपि प्रचीयन्ते संव्यवहाराणां वृद्धिलाभाः।

---

(१) अयमागतोऽस्मि।

(२) किं न जानात्यार्यः यथानुचितोपचारः, सहृदयस्य परिभवादपि महद्दुःखमुत्पादयति; तस्मादिहैवोचितायां भूम्यामुपविशामि।

(३) उपलक्षितमनेन किमपि? यदार्य्य आज्ञापयति।

चन्द। अज्ज, अधइं? अज्जस्स प्पसाएण अखण्डिदा मे वाणिज्जा (१)।

चाण। भोः श्रेष्ठिन्, अपि कदाचित् चन्द्रगुप्तदोषा अतिक्रान्तपार्थिवगुणान् अधुना स्मारयन्ति प्रकृतीः।

चन्दनदासः ॥ कर्णौपिधाय ॥ सन्तं पावं, सरअणिसासमुग्गमेण विअ पुण्णिमाचन्देन, चन्दसिरिणा अधिअं णन्दन्ति पअदीओ (२)।

चाण। भोः श्रेष्ठिन्, यद्येवं प्रीताभ्यः प्रकृतिभ्यः प्रियमिच्छन्ति राजानः।

चन्द। आणवेदु अज्जो, किंत्तेति अंवाद इमादो जणादो अत्यजाद इच्छीअदि त्ति (३)।

चाण। भोः श्रेष्ठिन् चन्द्रगुप्तराज्यमिदं, ननन्द राज्यं यतो नन्दस्येवार्थरुचेरर्थसम्बन्धः प्रीतिमुत्पादयति; चन्द्रगुप्तस्य तु भवतामपरिक्लेश एव।

चन्दनदासः ॥ सहर्षं ॥ अज्ज, अणुग्गहिदो ह्मि।

---

(१) आर्य्य, अथकिं? आर्य्यस्य प्रसादेन अखण्डिता मे वाणिज्या।

(२) शान्तं पापं, शारदनिशासमुद्गतेनेव पूर्णिमाचन्द्रेण, चन्द्रश्रियाभिनन्दन्ति प्रकृतयः।

(३) आज्ञापयत्वार्य्यः, किं कियदस्माज्जनादिष्यत इति।

चाण। भोः श्रेष्ठिन् स चापरिक्लेशः कथमाविर्भवतीति न पुनः प्रष्टव्याः स्मो भवता।

चन्द। आणवेदु अज्जो।

चाण। संक्षेपतो राजन्यविरुद्धाभिर्वृत्तिभिः।

चन्द। अज्ज, को उण अधण्णो, जो रण्णो विरुद्धोत्ति; अज्जेण अवगच्छीअदि? (१)

चाण। भवानेव तावत् प्रथमः।

चन्द ॥ कर्णौ पिधाय ॥ सन्तं पावं! सन्तं पावं! कीदिसो तिणाणं अग्गिना सह विरोहो? (२)

चाण। अयमीदृशो विरोधो; यत्त्वमद्यापि राजापथ्यकारिणोऽमात्यराक्षसस्य गृहजनं स्वगृहमभिनीय रक्षसि।

चन्द। अज्ज, अलीअं एदं; केणावि अणज्जेण अज्जस्स णिवेदिदं? (३)

चाण। भोः श्रेष्ठिन्, अलमनया शङ्कया भीताः; पूर्व्वराजपुरुषाः पौराणामनिच्छतामपि गृहेषु गृहजनं निक्षिप्य, देशान्तरं व्रजन्ति; ततस्तत्प्रच्छादनमेव दोषमुत्पादयति।

---

(१) आर्य्य कः पुनरधन्यो यो राज्ञे विरुद्ध इति, आर्य्येणावगम्यते?

(२) शान्तं पापं! शान्तं पापं! कीदृशस्तृणानामग्निना सह विरोधः?

(३) आर्य्यालीकमिदं; केनाप्यनार्य्येण आर्य्याय निवेदितं?

चन्द। एवणेदं; तस्सिं समये आसि अह्मघरे अमचरक्ख सस्स घरअणो (१)।

चाण। प्रथममनृतमिदानीमासीदिति, परस्परविरोधिनी वचने।

चन्द। एत्तिअंजेव्व अत्थि मे वाआच्छलं (२)।

चाण। भोः श्रेष्ठिन्, चन्द्रगुप्ते राजन्यपरिग्रहः छलानां; तत्समर्पय राक्षसस्य गृहजनमच्छलं भवतु भवतः।

चन्द। अज्ज, णं विस्सवेमि, तस्सिं समये आसी अह्मघरे अमचरक्खसस्स घरअणोत्ति (३)।

चाण। अथेदानीं क्व गतः?

चन्द। ण जाणामि कहिं गदोत्ति।

चाण ॥स्मितं कृत्वा॥ कथं न ज्ञायते नाम? भोः श्रेष्ठिन्, शिरसि फणी, दूरे तत्प्रतीकारः; अन्यच्च नन्दमिव विष्णुगुप्तइत्यर्द्धोक्ते ॥ लज्जां नाटयित्वा॥ नन्दमिव विष्णुगुप्तश्चन्द्रगुप्तममात्यराक्षसः समुच्छेत्स्यतीति, मैवं मंस्थाः। पश्य।

---

(१) एवं नेदं; तस्मिन् समये आसीदस्मद्गृहे अमात्यराक्षसस्य गृहजनः।

(२) एतावदेवास्ति मे वाक्छलं।

(३) आर्य्य, ननु विज्ञापयामि, तस्मिन् समये आसीदस्मद्गृहे अमात्यराक्षसस्य गृहजन इति।

विक्रान्तैर्नयशालिभिः सुसचिवैः श्रीव्वक्रनासादिभि
र्नन्दे जीवति, या तदा न गमिता स्थैर्य्यं चलन्ती मुड़ः,
तामेकत्वमुपागतां द्युतिमिव प्रह्लादयन्तीं जगत्,
कश्चन्द्रादिव चन्द्रगुप्तनृपतेः कर्तुं व्यवस्येत् पृथक्।

अपि च।

आखादितद्विरदशोणितशोणशोभां
सन्ध्यारुणामिव कलां शशलाञ्छनस्य,
जृम्भाविदारितमुखस्य मुखात् स्फुरन्तीं,
को हर्त्तुमिच्छति हरेः परिभूय दंष्ट्रां।

चन्द ॥ स्वगतं ॥ फलेन संपादिदं सोहदि दे विकत्थिदं (१)।

॥ नेपथ्ये ॥ उत्सारणा क्रियते।

चाण। शार्ङ्गरव, ज्ञायतां किमेतत्?

शिष्यः। यदाज्ञापयत्युपाध्याय इति॥ निष्क्रम्य, पुनः प्रविश्य॥ उपाध्याय, एष राज्ञश्चन्द्रगुप्तस्याज्ञया राजापथ्य कारी क्षपणको जीवसिद्धिः सनिकारं नगरान्निर्वास्यते।

चाण। क्षपणकः! अहह; अथवा, अनुभवतु राजापथ्य कारित्वस्य फलं। भोः श्रेष्ठिन्, चन्दनदास एवमयं, राजापथ्य कारिषु तीक्ष्णदण्डो राजा, तत् क्रियतां पथ्यं सुहृद्वचः; सम र्पतां राक्षसगृहजनश्चिरमनुभूयतामेवं विचित्रो राजप्रसादः

चन्द। णत्थि मे गेहे अमच्चघरअणो (२)।

(१) फलेन सम्पादितं शोभते ते विकत्थितं।
(२) नास्ति मे गेहे अमात्यगृहजनः।

॥ ततो नेपथ्ये कलकलः ॥

चाण। शार्ङ्गरव, ज्ञायतां पुनः किमेतत्।

शिष्यः। यदाज्ञापयत्युपाध्याय इति ॥ निष्क्रम्य, पुनः प्रविश्य ॥ उपाध्याय, असौ राजाज्ञया राजापथ्यकारी कायस्थः शकटदासः शूलमारोपयितुं नीयते।

चाण। स्वकर्म्मफलभाग् भवतु। भोः श्रेष्ठिन्, एवमयं राजापथ्यकारिषु तीक्ष्णदण्डो राजा, न मर्षयिष्यति राक्षसकलत्रप्रच्छादनं भवतः, तद्रक्ष परकलत्रेणात्मनः कलत्रं, जीवितञ्च।

चन्द। अज्ज, किं मे भअं दंसेसि? संतंपि गेहे अमच्चरक्खसस्स घरअणं ण समप्पेमि; किं उण असन्तं(१)?

चाण। चन्दनदास, एष ते निश्चयः।

चन्द। बाढं; एसो मे थिरो णिच्चओ (२)।

चाण ॥ स्वगतं ॥ साधु, चन्दनदास, साधु।

सुलभेष्वर्थलाभेषु परसंवेदने जने,
क इदं दुष्करं कुर्य्यादिदानीं शिविना विना।

॥ प्रकाशं ॥ चन्दनदास, एष ते निश्चयः।

चन्द। बाढं।

---

(१) आर्य्य किं भयं मे दर्शयसि? सन्तमपि गेहे अमात्य[illegible] गृहजनं न समर्पयामि; किं पुनरसन्तं?

[illegible]) एष मे स्थिरो निश्चयः।

चाण ॥ सक्रोधं ॥ दुरात्मन्, दुष्टवणिक्, अनुभूयतां तर्हि राजकोपः।

चन्द ॥ बाहू प्रसार्य्य ॥ सज्जोह्मि; अणुचिठ्ठदु अज्जो, अत्तणो अहिआरस्स अणुरूवं (१)।

चाण ॥ सक्रोधं ॥ शार्ङ्गरवोच्यतामस्मद्वचनात् कालपाशिको, दण्डपाशिकश्च; शीघ्रमयं दुष्टवणिक् निगृह्यतां; अथवा, तिष्ठतु; उच्यतां दुर्गपालो विजयपालश्च, गृहीतगृहसारमेनं सपुत्रकलत्रं संयम्य, रक्ष, तावद्यावन्मया वृषलाय कथ्यते, वृषल एवास्य सर्व्वस्वप्राणहरं दण्डं दातुमाज्ञापयिष्यति।

शिष्यः। यदाज्ञापयत्युपाध्यायः। इतः श्रेष्ठिन् इतः।

चन्द ॥ उत्थाय ॥ अज्ज, अअमाअच्छामि ॥ स्वगतं ॥ दिठ्ठिआ मित्तकज्जेण मे विणासो जणिदो, ण उण पुरिसदोसेण(२)॥ परिक्रम्य शिष्येण सह निष्क्रान्तः॥

चाण ॥ सहर्षं ॥ हन्त, लब्ध इदानीं राक्षसः।कुतः।

त्यजत्यप्रियवत्प्राणान् यथा तस्यायमापदि,

तथास्याप्यापदि प्राणा नूनं तस्यापि न प्रियाः।

॥ नेपथ्ये कलकलः॥

---

(१) सज्जोऽस्मि ; अनुतिष्ठत्वार्य्यः, आत्मनोऽधिकारसदृशं।

(२) आर्य्य अयमागच्छामि। दिष्ट्या मित्रकार्य्येण ममविनाशोजातो, न पुरुषदोषेण।



## ॥ अथ द्वितीयोऽङ्कः ॥

ततः प्रविशत्याहितुण्डिकः।

आहि। जाणन्ति तन्तजुत्तिं जहट्ठिअंमण्डलं अहिलिहन्ति, जं मन्तरक्खणपरा ते सप्पणराहिवे उवचरन्ति।

॥ आकाशे ॥ अज्ज तुमं उण किं भणासि? को तुमं त्ति? अज्ज, अहं क्खु आहिदुण्डिओ जिण्णविसो णाम ॥ पुनराकाशे ॥ किं भणासि अहंपि अहिणा खेलिदुं इच्छामि? अध कदरं उण अज्जो वित्तिं उवजीवदित्ति ॥ पनराकाशे॥ किं उण भणासि? राअउलसेवओह्मित्ति। णं खेलदि जेव्व अज्जो अहिणा? (१)

---

(१)। जानन्ति तन्त्रयुक्तिं यथास्थितं मण्डलमभिलिखन्ति, ये मन्त्ररक्षणपरास्ते सर्पनराधिपे उपचरन्ति।

आर्य्य, त्वं किं पुनः भणसि? कस्त्वमिति? आर्य्य, अहमाहितुण्डिको जीर्णविषो नाम। किं भणसि? अहमपि अहिना खेलितुमिच्छामि। अथ कतरां पुनरार्य्यो वृत्तिमुपजीवतीति। किं भणसि? राजकुलसेवकोऽस्मीति। ननु खेलत्येवार्य्योऽहिना?

किं भणासि कधंत्ति? अमन्तोसहिकुसलो वालग्गाही, अग्गही दङ्कुसो मत्तगअवरारोही, लद्धाहिआरा जिअकाशी राजसेवओत्ति, एदे तिण्णि अवस्सं विणासमणुभवन्ति। कधं; दिट्ठमत्तो अदिक्कन्तो एसो॥पुनराकाशे॥ अज्ज तुमं उण किं भणासि? किं एदेसुं पेडासमुग्गकेसुंत्ति? अज्ज, अप्पजोविआसम्पादआ सप्पा॥पुनराकाशे॥ किं भणासि? पेक्खिदुमिच्छामित्ति। पसीददु पसीददु अज्जो, अत्थानं क्खु एदं; ता जइ दे कोदूहलं, ता एहि एदस्सिं आआसे दंसेमि॥ पुनराकाशे॥ किंभणासि? एदं क्खु भट्टिणा अमच्चरक्खसस्स गेहं, णत्थि इध अह्मारिसाणं प्पवेसो, त्ति, तेण हि गच्छदु अज्जो, जीविआए प्पसादेण अत्थि एत्थ मम प्पवेसोत्ति; कधं; एसोवि अतिक्कन्तो (१)।

---

(१)कथमिति। अमन्त्रौषधिकुशलो व्यालग्राही,अगृहीताङ्कुशो मत्तगजवरारोही, लब्धाधिकारो जितकाशी राजसेवक, इत्येते चयोऽप्यवश्यं विनाशमनुभवन्ति। कथं; दृष्टमात्रोऽतिक्रान्त एषः। आर्य्य त्वं पुनः किं भणसि? किमेतेषु पेटकसमुद्गकेष्विति? आर्य्य आत्मजीविकासम्पादकाः सर्पाः।किं भणसि?प्रेक्षितुमिच्छामीति।प्रसीदतु प्रसीदत्वार्य्यः,अस्थानंखलु एतत्;तस्मात् यदि ते कौतूहलं, तदेहि अस्मिन्नावासे दर्शयामि। किं भणसि? इदं खलु भर्त्तुरमात्यराक्षसस्य गृहं, नास्त्यस्माकमत्र प्रवेश, इति तेन हि गच्छत्वार्य्यः, जीविकायाः प्रसादेन अस्तीह मम प्रवेश इतिकथ मेषोऽप्यतिक्रान्तः।

॥ दिशोऽवलोक्य संस्कृतमाश्रित्य स्वगतं॥ अहो आश्चर्य्यं, चाणक्यमतिपरिगृहीतं चन्द्रगुप्तमवलोक्य, विफलमिव राक्षस प्रयत्नमवगच्छामि। राक्षसमतिपरिगृहीतञ्च मलयकेतुमव लोक्य, चलितमिवाधिराज्याच्चन्द्रगुप्तमवगच्छामि। तथाहि।

कौटिल्यधीरज्जुनिबद्धमूर्त्तिं
मन्ये स्थिरां मौर्य्यकुलस्य लक्ष्मीं,
उपायहस्तैरपि राक्षसेन
विकृष्यमाणामिव लक्षयामि।

तदेवमनयोः सुनयशालिनोः सचिवयोर्व्विरोधे संशयितेव राज्यलक्ष्मीर्लक्ष्यते। कुतः।

विरुद्धयोर्भृशमिह मन्त्रिमुख्ययो
र्म्महावने वनगजयोरिवान्तरे
अनिश्चयाद्गजवशयेव भीतया
गतागतैर्भृशमिह खिद्यते श्रिया।

तद्यावदहममात्यराक्षसं पश्यामि।

॥ ततः प्रविशत्यासनस्थः स्वभवनगतः पुरुषेणानुगम्यमानः सचिन्तो राक्षसः॥

राक्ष॥ ऊर्द्ध्वमवलोक्य सवाष्पं॥ कष्टं भोः, कष्टं;

वृष्णीनामिव नीतिविक्रमगुणव्यापारशान्तद्विषां
नन्दानां विपुले कुलेऽकरुणया नीते नियत्या क्षयं,
चिन्तावेशसमाकुलेन मनसा रात्रिन्दिवं जाग्रतः
सैवेयं मम चित्रकर्म्मरचना भित्तिं विना वर्त्तते।

अथवा। नेदं विस्मृतभक्तिना, न विषयव्यापारमूढात्मना,
प्राणप्रच्युतिभीरुणा न च मया, नात्मप्रतिष्ठार्थिना;
अत्यर्थं परदास्यमेत्य निपुणं नीतौ मनो दीयते;
देवः स्वर्गगतोऽपि शात्रववधेनाराधितः स्यादिति।

॥ आकाशमवलोकयन् सास्त्रं ॥ भगवति कमलालये, भृशम गुणज्ञासि। कुतः।

आनन्दहेतुमपि देवमपास्य नन्दं,
सक्तासि किं, कथय, वैरिणि मौर्य्यपुत्रे;
दानाम्बुराजिरिव गन्धगजस्य नाशे,
तत्रैव किं न, चपले, प्रलयं गतासि।

अपिच। अनभिजाते।

पृथिव्यां किं दग्धाः प्रथितकुलजा भूमिपतयः,
पतिं, पापे, मौर्य्यं यदसि कुलहीनं क्षतवती।
प्रकृत्या वाकाशप्रभवकुसुमप्रायचपला,
पुरन्ध्रीणां प्रज्ञा पुरुषगुणविज्ञानविमुखी।

अपिच। अविनीते।

तदहमाश्रयोन्मूलनेनैव त्वामकामां करोमि ॥ विचिन्त्य ॥ मया तावत् सुहृत्तमस्य चन्दनदासस्य गृहे गृहजनं निक्षिप्य नगरान्निर्गच्छता न्याय्यमनुष्ठितं॥ किं कारणमिति? कुसुमपुराभियोगं प्रति अनुदासीनो राक्षस इति, तत्रस्थानामस्माभिः सहैककार्य्याणां देवपादोपजीविनां नोद्यमः शिथिलीभविष्य

तीति; चन्द्रगुप्तशरीरमभिद्रोग्धुमस्मत्प्रयुक्तानां तीक्ष्णरसदायिनामुपसंग्रहार्थं, परकृत्यपक्षोपजापार्थञ्च, महता कोषसञ्चयेन स्थापितः शकटदासः, प्रतिक्षणमरातिवृत्तान्तोपलब्धये; तत्संहतिभेदाय च व्यापारिताः सुहृदो जीवसिद्धिप्रभृतयस्तत् किमत्र बहुना।

दृष्टात्मजः सपदि सान्वय एव देवः,
शार्दूलपोतमिव यं परिपुष्य नष्टः,
तस्यैव बुद्धिविशिखेन भिनद्मि मर्म
वर्मीभवेद्यदि न दैवमदृश्यमानं।

ततः प्रविशति कञ्चुकी ॥

कञ्चु॥ कामं नन्दमिव प्रमथ्य जरया चाणक्यनीत्या यथा,
धर्मो मौर्य्यइव, क्रमेण, नगरे नीतः प्रतिष्ठां मयि।
तं सम्प्रत्युपचीयमानमपि मे लब्धान्तरः सेवया,
लोभो राक्षसवज्जिराय यतते, जेतुं न शक्नोति च।

॥ दृष्ट्वा॥ अयममात्यराक्षसः॥ परिक्रम्योपसृत्य च॥ अमात्य स्वस्ति भवते।

राक्ष। आर्य्य, जाजले, अभिवादये। प्रियम्वदक, आसनमस्योपनय।

प्रियं। एदं आसणं उपविसदु अज्जो।

कञ्चु॥ नाट्येनोपविश्य॥ अमात्य, कुमारो मलयकेतुरमात्यं विज्ञापयति; चिरात्प्रभृत्यार्य्यः परित्यक्तोचितशरीर

संस्कार इति पीड्यते मे हृदयं। यद्यपि स्वामिगुणाः सहसा न शक्यन्ते विस्मर्त्तुं, तथापि मद्विज्ञापनां मानयितुमर्हत्यार्य्यः ॥ इत्याभरणानि दर्शयित्वा ॥ अमात्य, इमान्याभरणानि कुमारेण स्वशरीरादवतार्य्य प्रेषितानि, धारयितुमर्हत्यार्य्यः।

राच। आर्य्य, जाजले, विज्ञाप्यतां मद्वचनात् कुमारः; विस्मृता मया स्वामिगुणास्तव गुणपक्षपातिना। किन्तु।

न तावन्निर्वीर्य्यैः परपरिभवाक्रान्तिकृपणै
र्व्वहाम्यङ्गैरेभिः प्रतनुमपि संस्काररचनां;
न यावन्निःशेषक्षयितरिपुचक्रस्य निहितं
सुगाङ्गे, हेमाङ्कं, नवर, तव सिंहासनमिदं।

कञ्चु। अमात्य, त्वयि नेतरि सुलभमेतत् कुमारस्य, तत् प्रतिमान्यतां कुमारस्य प्रथमः प्रणयः।

राच॥ आर्य्य, कुमार इवानतिक्रमणीयवचनो भवानपि, तदनुष्ठीयते कुमारस्याज्ञा।

कञ्चु॥ नाट्येन भूषणानि परिधाप्य॥ स्वस्ति भवते, साधयाम्यहं।

राच। आर्य्य, अभिवादये।

कञ्चु। स्वनियोगं साधयाम्यहमिति॥ सत्कृतो निष्क्रान्तः॥

राच॥ प्रियम्वदक, ज्ञायतां कोऽयमस्मद्दर्शनार्थी द्वारि तिष्ठति।

प्रियं॥ जं अज्जो आणवेदित्ति॥ निष्क्रम्य आहितुण्डिकं दृष्ट्वा॥ णं अज्ज, को तुमं? (१)

आहि। भद्द, अहं क्खु आहितुण्डिओ, जिस्सविसो नाम, इच्छामि अमचरक्खसस्स पुरदो सप्पेहिं कीलिदुं (२)।

प्रियं। चिट्ठ, जाव अमचस्स णिवेदेमि॥ राक्षसमुपसृत्य॥ अज्ज, एसो क्खु सप्पोवजीवी इच्छदि सप्पाणं अमचस्स पुरदो दंसेदुं (३)।

राक्ष॥ वामाक्षिस्पन्दं सूचयित्वा, आत्मगतं॥ कथं प्रथममेव सर्पदर्शनं॥ प्रकाशं॥ प्रियम्वदक, न नः कुतूहलमस्ति सर्पेषु, तत्परितोष्य विसर्ज्जयैनं।

प्रियं। जं अज्जो आणवेदि॥ आहितुण्डिकमुपसृत्य॥ भद्द, एसो क्खु दे अमचो अदंसणेण फलं देदि, ण उण दंसणेण (४)।

---

(१) यदार्य्य आज्ञापयति। ननु आर्य्य, कस्त्वं?

(२) भद्र, अहं खल्वाहितुण्डिको, जीर्णविषो नाम, इच्छाम्यमात्यराक्षसस्य पुरतः सर्पैः खेलितुं।

(३) तिष्ठ यावदमात्यस्य निवेदयामि। आर्य्य एष खलु सर्पोपजीवी इच्छति सर्पान् अमात्यस्य पुरतो दर्शयितुं।

(४) भद्र, एष खलु ते अमात्योऽदर्शनेन फलं ददाति, न पुनर्दर्शनेन।

आहि। भद्द, विणवेहि मम वअणेण अमचं, ण केवलं अहं सप्पोवजीवी, पाउअ कवी क्खु अहं; ता जइ मम दंसणेण अमचो पसादं ण करेदि, ता एदं पि पत्तअं वाचेदुं पसीद दुत्ति ॥ पत्रमर्पयति (१)।

प्रियं॥ पत्रं गृहीत्वा राक्षसमुपसृत्य ॥ अमच, एसो क्खु आहितुण्डिओ विणवेदि; ण केवलं अहं सप्पजोवी, पाउअ कवो क्खु अहं, ता जइ मे अमचो दंसणेण प्पसादं ण करेदि, ता एदंपि पत्तअं वाचेदुं पसीददुत्ति (२)।

राच॥ पत्रं गृहीत्वा वाचयति॥

पाउण निरवसेसं, कुसुमरसं अत्तणो कुसलदाए,
जं उग्गिरदि भमरो तं, अण्णाणं कुणइ कज्जं (३)।

---

(१) भद्र, विज्ञापय मम वचनेनामात्यं, न केवलमहं सर्पोप जीवी, प्राकृतकविः खल्वहं; तद्यदि मे दर्शनेनामात्यः प्रसादं न करोति, तर्हि एतत् पत्रं वाचयितुं प्रसीदत्विति।

(२) अमात्य, एष खल्वाहितुण्डिका विज्ञापयति; न केवलमहं सर्पजीवी, प्राकृतकविः खलु अहं; तस्माद्यदि मे अमात्यो दर्शनेन प्रसादं न करोति, तत् एतदपि तावत् पत्रकं वाचयितुं प्रसीद त्विति।

(३) पीत्वा निरवशेषं कुसुमरसमात्मनः कुशलतया,
यदुद्गिरति भ्रमरो, ऽन्यषां तत्करोति कार्य्यं।

राक्ष ॥ आत्मगतं ॥ अये, कुसुमपुरवृत्तान्तज्ञोऽहं, भवत्प्रणिधिश्चेति गाथार्थः, आः कार्य्यव्यग्रत्वान्मनसः प्रभूतत्वाच्च प्रणिधीनां विस्मृतमिदानीं स्मृतिरुपलब्धा, व्यक्तमाहितुण्डिकच्छद्मना कुसुमपुरादागतेन विराधगुप्तेन भवितव्यं॥ प्रकाशं॥ प्रियम्वदक, प्रवेशयैनं, सुकविरेषः, श्रोतव्यमस्मात्सुभाषितं।

प्रियं। जं अज्जो आणवेदित्ति॥ आहितुण्डिकमुपसृत्य॥ उपसप्पदु अज्जो (१)।

आहि॥ नाट्येनोपसृत्यावलोक्य च स्वगतं॥ अये, अयममात्यराक्षसस्तिष्ठति॥ संस्कृतमाश्रित्य॥ स एषः,

वामां बाहुलतां निवेश्य शिथिलां कण्ठे विवृत्तानना,
स्कन्धे दक्षिणया बलान्निहितयाप्यङ्के पतन्त्या मुहुः,
गाढालिङ्गनसङ्गपीडितमुखं यस्योद्यमाशङ्किनी,
मौर्य्यस्योरसि नाधुनापि कुरुते वामेतरं श्रीः स्तनं।

॥ प्रकाशं ॥ जअदु, जअदु, अमच्चो (१)।

राक्ष ॥ विलोक्य ॥ अये विराध इत्यर्द्धोक्ते॥ विरूढस्मृतिः॥ प्रियम्वदक, भुजङ्गैरिदानीं विनोदः, तद्विश्रम्यतां परिजनेन, त्वमपि स्वमधिकारमशून्यं कुरु।

प्रियं। जं अमच्चो आणवेदित्ति॥ सपरिवारो निष्क्रान्तः॥

---

(१) जयतु जयतु अमात्यः।

राक्ष। सखे विराधगुप्त, इदमासनमास्यतां।

विरा। यदाज्ञापयत्यमात्य इति॥ नाट्येनोपविष्टः॥

राक्ष॥ सखेदं निर्व्वर्ण्य॥ अहो देवपादपद्मोपजीविनो जनस्येयमवस्था इति॥ रोदिति॥

विरा। अमात्य, अलं शोकेन, नातिचिरादमात्योऽस्मान् नूनं पुरातनोमवस्थामारोपयिष्यति।

राक्ष। सखे विराधगुप्त, वर्णयेदानीं कुसुमपुरवृत्तान्तं।

विरा। अमात्य, विस्तीर्णः कुसुमपुरवृत्तान्तस्तदाज्ञापय कुतः प्रभृति कथयामि।

राक्ष। सखे, चन्द्रगुप्तस्य तावन्नगरप्रवेशात्प्रभृति, मत्प्रणिधिभिस्तीक्ष्णरसदायिभिः किमनुष्ठितमित्यादितः श्रोतुमिच्छामि।

विरा। एष कथयामि। अस्ति तावच्छकयवनकिरातकाम्बोजपारसीकवाह्लीकप्रभृतिभिश्चाणक्यमतिपरिगृहीतैश्चन्द्रगुप्तपर्व्वतेश्वरबलैरुदधिभिरिव, प्रलयकालचलितसलिलसञ्चयैः, समन्तादुपरुद्धं कुसुमपुरं।

राक्ष॥ शस्त्रमाकृष्य ससंभ्रमं॥ मयि स्थिते, कः कुसुमपुरमवरोत्स्यति। प्रवीरक, प्रवीरक, क्षिप्रमिदानीं,।

प्राकारान् परितः शरासनधरः क्षिप्रं परिक्षिप्यतां;
द्वारेषु द्विरदैः परद्विपघटाभेदक्षमैः स्थीयतां;
मुक्त्वा मृत्युभयं प्रहर्त्तुमनसः शत्रोर्ब्बले दुर्ब्बले,
ते निर्यान्तु, मया सहैकमनसो, येषामभीष्टं यशः

विरा। अमात्यासमावेगेन; वृत्तमिदं वर्त्तते।

राक्ष। कथं वृत्तमिदं; मया पुनर्ज्ञातं स एव कालो व र्त्ततइति ॥ शस्त्रमुत्सृज्य॥ हा देव नन्द, स्मरति ते राक्षसः प्रसादानां, यस्त्वेवंविधे काले।

यत्रैषा मेघनीला चलति गजघटा, राक्षसस्तत्र याया देतत् पारिप्लवाम्भःस्रुतितुरगबलं धार्य्यतां राक्षसेन; पत्तीनां राक्षसोऽन्तर्नयतु बलमिति प्रेषयन्मह्यमाज्ञा मज्ञासीः स्नेहयोगात् स्थितमिह नगरे राक्षसानां सहस्रं। ततस्ततः।

विरा। ततः समन्तादुपरुद्धं पुष्पपुरमवलोक्य,बहुदिवसप्रवृत्त मतिमहदुपरोधवैशसमुपरि पौराणां परिवर्त्तमानमसहमाने, तस्यामवस्थायां, पौरजनापेक्षया, सुरङ्गामुपेत्यापक्रान्ते तपो वनाय देवे सर्व्वार्थसिद्धौ। स्वामिविरहात् सुशिथिलीकृतप्र यत्नेषु युष्मद्बलेषु, जयघोषणाव्याघातादिसाहसानुमितान्तर्न गरवासिषु; पुनरपि नन्दराज्यप्रत्यानयनाय सुरङ्गाभिगतेषु युष्मासु, चन्द्रगुप्तनिधनाय युष्मत्प्रयुक्तया विषकन्यया घातित तपस्विनि पर्व्वतेश्वरे।

राक्ष। सखे, पश्याश्चर्य्यं!

कर्णेनेव विषाङ्गनैकपुरुषव्यापादिनी रक्षिता,
हन्तुं शक्तिरिवार्ज्जुनं बलवती, या चन्द्रगुप्तं मया,
सा विष्णोरिव विष्णुगुप्तहतकस्यात्यन्तिकश्रेयसे
हैडिम्बेयमिवेत्य पर्व्वतनृपं तद्वध्यमेवावधीत्।

विरा। अमात्य, दैवस्यात्र कामचारः; किमत्र क्रियते।

राक्ष। ततस्ततः।

विरा। ततः पितृवधपरिचासादपक्रान्ते कुसुमपुरात् कुमारे मलयकेतौ. विश्वासिते च पर्व्वतकभ्रातरि वैरोधके, प्रकाशीकृते च चन्द्रगुप्तस्य नन्दभवनप्रवेशे, चाणक्यहतकेन आहूयाभिहिताः कुसुमपुरनिवासिनः सर्व्वएव सूत्रधाराः, यथा, सांवत्सरिकवचनादद्यैवार्द्धरात्रसमय, एवाभिमतस्य न्द्रगुप्तस्य, नन्दभवनप्रवेशो भविष्यतीति, ततः प्रथमद्वारा प्रभृति संस्क्रियतां राजभवनमिति, ततः सूत्रधारैरभिहितं, आर्य्य, प्रथममेव देवस्य चन्द्रगुप्तस्य नन्दभवनप्रवेशमुपलभ्य, सूत्रधारेण दारुवर्म्मणा कनकतोरणन्यासादिभिः संस्कारविशेषैः संस्कृतं प्रथमराजद्वारं; इदानीमस्माभिरभ्यन्तरे संस्कारो वि धेयइति। ततश्चाणक्यवटुना, अनादिष्टेनैव दारुवर्म्मणा संस्कृतं राजभवनद्वारमिति परितुष्टेन, दारुवर्म्मणः सुचिरं दाक्ष्यमभि नन्द्याभिहितं, अचिरादस्य दाक्ष्यस्यानुरूपं फलं दारुवर्म्माधिग मिष्यति

राक्ष॥ सोद्वेगं॥ सखे, कुतश्चाणक्यवटोः परितोषः, अफल मनिष्टफलं वा दारुवर्म्मणः प्रयत्नमवगच्छामि। यदनेन बुद्धि मोहात्, अथवा राजभक्तिप्रकर्षात्, नियोगकालमप्रतीक्षमाणेन, सञ्जनितश्चाणक्यवटोश्चेतसि बलवान्विकल्पः। ततस्ततः।

विरा। ततश्चाणक्यहतकेनानुकूललग्नवशादद्यार्द्धरात्र समये चन्द्रगुप्तस्य नन्दभवनप्रवेशो भविष्यतीति, शिल्पिनः पौरा

स्य गृहीतसमयान् कृत्वा, तस्मिन्नेव क्षणे पर्व्वतेश्वरभ्रातरं वैरोधकमेकासने चन्द्रगुप्तेन सहोपवेश्य, कृतः पृथ्वीराज्यार्द्ध भागः।

राच। किन्नामिस्तद्ं पर्व्वतभ्रात्रे वैरोधकाय पूर्व्वप्रतिश्रुतं राज्यार्द्धमिति?

विरा। अमात्य, अथकिं।

राच॥ आत्मगतं॥ नियतमतिधूर्त्तवटुना तस्यापि तपस्विनः कमप्युपांशुबधमाकलय्य, पर्व्वतेश्वरविनाशजनितस्यायशसः परिहारार्थमेषा लोकप्रतिपत्तिरुपचरिता॥ प्रकाशं॥ ततस्ततः।

विरा। ततः प्रथममेव प्रकाशीकृते चन्द्रगुप्तस्यार्द्धराज्ये नन्दभवनप्रवेशे, कृताभिषेके च वैरोधके, हिमविमलमुक्तागुणपरिक्षेपोपरचितपटुवारवाणप्रच्छादितशरीरे, मणिमयमुकुटपट्टबन्धनिविडनियमितरुचिरतरमौलौ, सुरभिकुसुमदामवैकचिकावभासितवचःस्थले, परिचितदर्शनैरप्यनभिज्ञायमाने, नृपाकृतौ, चाणक्यहतकस्याज्ञया चन्द्रगुप्तोपवाह्यां चन्द्रलेखाभिधानां नागवशामारुह्य, चन्द्रगुप्तानुयायिना राजलोकेनानुगम्यमाने, जवेन देवस्य नन्दस्य भवनं प्रविशति वैरोधके, युष्मत्प्रयुक्तेन सूत्रधारेण दारुवर्म्मणा, चन्द्रगुप्तोऽयमिति मन्यमानेन; वैरोधकस्योपरि निपातनाय सज्जीकृतं यन्त्रतोरणं। अत्रान्तरे, वहिर्निगृहीतवाहनेषु स्थितेषु चन्द्रगुप्तानुयायिषु भूमिपालेषु, युष्मत्प्रयुक्तेनैव चन्द्रगुप्तनिषादिना वर्व्वरकेण, कनकदण्डिका

न्तनिहितामसिपुत्रिकामाकर्ष्टुकामेनावलम्बिता करेण, कनक शृङ्खलामुखावलम्बिनी कनकदण्डिका।

राक्ष। उभयोरप्यस्थाने यत्नः। ततस्ततः;

विरा। अथ जघनाभिघातमुत्प्रेक्षमाणा गजवधूरतिजव तया गत्यन्तरमारूढवती, ततः प्रथमगत्यनुरोधप्रत्याकलित मुक्तेन च भ्रष्टलक्ष्यं, पतता यन्त्रतोरणेनाकृष्टकृपाणीको व्यपा णिरनासादयन्नेव चन्द्रगुप्तप्रत्याशया वैरोधकं, दारुवर्म्मणा ह तस्तपस्वी वर्व्वरकः। ततो दारुवर्म्मणा, यन्त्रतोरणनिपातन मन्यात्मविनाशफलमवधार्य्य, पूर्व्वमेवोत्तुङ्गतोरणस्थानमा रूढेन, यन्त्रघटनवीजं लोहकीलकमादाय, हस्तिनीगतएव हतस्तपस्वी वैरोधकः।

राक्ष। हा कष्टमनर्थद्वयमापतितं। न हतश्चन्द्रगुप्तोऽसौ, हतौ वैरोधवर्व्वरकौ॥ सावेगमात्मगतं॥ नेतावुभौ हतौ, दैवेन वयमेव हताः॥ प्रकाशं॥ अथ स सूत्रधारो दारुवर्म्मा क?

विरा। वैरोधकपुरःसरैः पदातिलोकैर्लोष्टघातं हतः।

राक्ष॥ सास्रं॥ कष्टं भोः कष्टं अहो वत्सलेन सुहृदा दारु वर्म्मणा वियुक्ताः स्मः। अथ, तेन तत्र भिषजा अभयदत्तेन किम नुष्ठितं?

विरा। अमात्य, सर्व्वमनुष्ठितं।

राक्ष॥ सहर्षं॥ अपि नाम सखे, हतश्चन्द्रगुप्तहतकः?

विरा। अमात्य, दैवान्न हतः।

राच॥ सविषादं॥ तत्किमिदानीं कथयसि परितुष्टः सर्व्वमनुष्ठितमिति?

विरा। अमात्य, कल्पितमनेन विषचूर्णमिश्रौषधं चन्द्रगुप्ताय। तच्च प्रत्यक्षीकुर्व्वता चाणक्यहतकेन कनकभाजने वर्णान्तरमुपगतमुपलभ्याभिहितश्चन्द्रगुप्तः;वृषल, वृषल, सविषमौषधं, न पातव्यमिति।

राच। शठः खल्वसौ वटुः। अथ स वैद्यः कथं

विरा। स खलु वैद्यस्तदेवौषधं पायितश्चोपरतश्च।

राच॥ सविषादं॥ अहह, महान्विज्ञानराशिरुपरतः। भद्र, अथ तस्य शयनाधिकृतस्य प्रमोदकस्य किं वृत्तं।

विरा। आत्मविनाशः।

राच॥ सोद्वेगं॥ कथमिव?

विरा। स खलु मूर्खस्तं युष्माभिरतिसृष्टं महान्तमर्थराशिमवाप्य, महता व्ययेनोपभोक्तुमारब्धवान्। ततः कुतोऽयं भूयान् धनागमस्तवेति पृच्छ्यमानोऽयं, यदा वाक्यभेदान् बहूनकथयत, तदा चाणक्यहतकादेशाद्विचित्रेण वधेन व्यापादितः।

राच॥ सोद्वेगं॥ कथमत्रापि वयमेवोपहता दैवेन। अथ, शयितस्य चन्द्रगुप्तस्य शरीरे प्रहर्त्तुमस्मत्प्रयुक्तानां नरपतिशयनगृहस्यान्तःसुरङ्गायां निवसतां, वीभत्सकादीनां, को वृत्तान्तः?

विरा। अमात्य, दारुणो वृत्तान्तः।

राक्ष॥ सावेगं॥ कथं दारुणो वृत्तान्तः? न खलु विदितास्ते तत्र निवसन्तश्चाणक्यहतकेन।

विरा। अथकिं?

राक्ष। कथमिव?

विरा। प्राक् चन्द्रगुप्तप्रवेशात् प्रविष्टमात्रेणैव शयनगृहं चाणक्येन दुरात्मना समन्तादवलोकितं; ततस्त्वेकस्माद्भित्तिच्छिद्रात, गृहीतभक्तावयवानांपिपीलिकानां निष्क्रामन्तीनां पङ्क्तिमवलोक्य, पुरुषगर्भमेतद्गृहमिति गृहीतार्थेन, दाहितं तदेव शयनगृहं। तस्मिंश्च दह्यमाने धूमावरुद्धदृष्टिविषयाः, प्रथममपिहितनिर्गमनमार्गमनधिगम्य, सर्व्व एव बीभत्सादयस्तत्रैव ज्वलनमुपगता उपरताश्च।

राक्ष ॥ सास्रं॥ सखे, पश्य, चन्द्रगुप्तस्य दैवसम्पदा सर्व्व एव उपरताः॥ सचिन्तं॥ सखे, दैवसम्पदं पश्य दुरात्मनश्चन्द्रगुप्त हतकस्य। कुतः।

कन्या तस्य बधाय या विषमयी गूढं प्रयुक्ता मया,
दैवात् पर्व्वतकस्तया विनिहतो, यस्तस्य राज्यार्द्धहृत्।
ये शस्त्रेषु रसेषु च प्रणिहितास्तैरेव ते घातिताः;
मौर्य्यस्यैव फलन्ति, पश्य, विविधश्रेयांसि मे नीतयः।

विरा। अमात्य, तथापि प्रारब्धमपरित्याज्यमेव। पश्यत्वमात्यः;

प्रारभ्यते न खलु विघ्नभयेन नीचैः,
प्रारभ्य विघ्नविहता विरमन्ति मध्याः;
विघ्नैः पुनः पुनरपि प्रतिहन्यमानाः,
प्रारब्धमुत्तमगुणास्त्वमिवोद्वहन्ति।

अपिच।

किं शेषस्य भरव्यथा न वपुषि, क्ष्मां न क्षिपत्येष यत्;
किं वा नास्ति परिश्रमो दिनपतेरास्ते न यन्निश्चलः;
किं त्वङ्गीकृतमुत्सृजन् कृपणवत् श्लाघ्यो जनो लज्जते,
निर्व्यूढं प्रतिपन्नवस्तुषु सतामेकं हि गोत्रव्रतं।

राक्ष। सखे, प्रारब्धमपरित्याज्यमिति प्रत्यक्षमतङ्गवतः। ततस्ततः।

विरा। ततः प्रभृति चाणक्यहतकश्चन्द्रगुप्तस्य शरीरे, सहस्रगुणमप्रमत्त, एभ्य, एव ईदृशं भवतीति, अन्विष्य, अन्विष्य, निगृहीतवान् कुसुमपुरनिवासिनो नन्दामात्यपुरुषान्।

राक्ष॥ सावेगं॥ वयस्य, अथ के के निगृहीताः?

विरा। अमात्य, आदावेव तावत् क्षपणको जीवसिद्धिः सनिकारं नगरान्निर्व्वासितः

राक्ष ॥ आत्मगतं॥ एतावत् सह्यं, न नष्परिग्रहस्य स्थानपरिभ्रंशः पीडयिष्यति ॥ प्रकाशं॥ सखे, कमपराधमुद्दिश्य निर्व्वासित एषः?

विरा। एष दुरात्मा राक्षसप्रयुक्तया विषकन्यया पर्व्वतेश्वरं घातितवानिति।

राक्ष ॥ स्वगतं ॥ साधु, कौटिल्य, साधु।

परिहृतमयशः पातितमस्मासु च, घातितोऽर्द्धराज्यहरः,

एकमपि नीतिवीजं वहुफलतामेति यस्य तव।

॥ प्रकाशं ॥ ततः।

विरा। ततश्चन्द्रगुप्तशरीरमभिद्रोग्धुमनेन व्यापारिता दारुवर्म्मादयइति नगरे प्रख्याप्य, शकटदासः शूलमारोपितः।

राक्ष ॥ सास्रं ॥ हा सखे शकटदास, अयुक्तस्तवायमीदृशो मृत्युः। अथवा, स्वाम्यर्थमुपरतो न शोच्यस्त्वमसि, वयमेवात्र शोच्या ये नन्दकुलविनाशेऽपि जीवितुमिच्छामः।

विरा। अमात्य, नैतदेवं; स्वाम्यर्थएव साधयितव्यः।

राक्ष। सखे,

अस्माकममुमेवार्थमवलम्ब्य जिजीविषा,

परलोकगतो देवः कृतघ्नैर्नानुगम्यते।

विरा। अमात्य नैतदेवं ॥ अस्माकममुमेवार्थमित्यादि पुनः पठति ॥

राक्ष। सखे, कथ्यतां; अपरस्यापि सुहृद्व्यसनशतस्य श्रवणे सज्जा वयं।

विरा। ततएतदुपलभ्य, चन्दनदासेनोपह्वरशो हार्द्देनापवाहितममात्यकलत्रं।

राच। सखे, क्रूरस्य चाणक्यवटोर्विरुद्धमनुष्ठितं चन्दनदासेन।

विरा। अमात्य, नन्वयुक्ततरः सुहृद्द्रोहः।

राच। ततस्ततः;

विरा। ततो, याच्यमानेनापि यदा न समर्पितमनेनामात्यकलत्रं ततः कुपितेन चाणक्यवटुना,

राच ॥ सोद्वेगं॥ स खलु व्यापादितः,

विरा। अमात्य, न खलु व्यापादितः, किन्तु गृहीतगृहसारः सपुत्रकलत्रः संयम्य, बन्धनागारे निक्षिप्तः।

राच। ततः किं परितुष्टः कथयसि, अपवाहितमनेन राक्षसकलत्रमिति; ननु वक्तव्यं, संयतः सकलत्रो राक्षस इति।

॥ प्रविश्य पुरुषः॥ जअदु, जअदु, अज्जो; अज्ज एसो क्खु सअडदासो पडिहारभूमिमुवत्थिदो (१)।

राच। प्रियम्वदक, अपि सत्यं?

प्रियं। अलिअं किं अमच्चपादोपजीविणो मन्तिदुं जाणन्ति (२)।

---

(१) जयतु, जयतु, आर्य्यः; आर्य्य एष खलु शकटदासः प्रतिहारभूमिमुपस्थितः।

(२) अलीकं किं अमात्यपादोपजीविनो मन्त्रयितुं जानन्ति।

राक्ष। सखे, विराधगुप्त किमेतत्।

विरा। अमात्य, रक्षति खलु भव्यं भवितव्यता।

राक्ष। प्रियम्वदक, यद्येवं तत्किं चिरयसि? क्षिप्रं प्रवेश्य, मामाश्वासय।

प्रियं। जं अमच्चो आणवेदित्ति ॥ निष्क्रान्तः ॥

ततः प्रविशति सिद्धार्थकेनानुगम्यमानः शकटदासः।

शक ॥ दृष्ट्वा, आत्मगतं ॥

दृष्ट्वा मौर्य्यमिव प्रतिष्ठितपदं शूलं धरित्रयास्तले,
तल्लक्ष्मीमिव चेतसः प्रमथिनीं मूर्द्धा च वध्यस्रजं;
श्रुत्वा स्वाम्युपरोधरौद्रविषमानाघाततूर्य्यस्वनान्,
न ध्वस्तं प्रथमाभिघातकठिनं मन्ये मदीयं मनः।

॥ नाट्येनावलोक्य सहर्षं ॥ अयममात्यराक्षसस्तिष्ठति य एषः,

अक्षीणभक्तिः क्षीणेऽपि नन्दे स्वाम्यर्थमुद्वहन्।
पृथिव्यां स्वामिभक्तानां प्रमाणे परमे स्थितः।

॥ उपसृत्य ॥ जयत्यमात्यः।

राक्ष ॥ नाट्येनावलोक्य सहर्षं ॥ सखे शकटदास, दिष्ट्या कौटिल्यगोचरगतोऽपि दृष्टोऽसि, तत्परिष्वजस्व मां।

शक ॥ तथा करोति ॥

राक्ष ॥ तं परिष्वज्य ॥ इदमासनमास्यतां।

शक। यदाज्ञापयत्यमात्य इति ॥ नाट्येनोपविष्टः ॥

राक्ष। सखे शकटदास, अथ कोऽयमस्य मे हृदयानन्दस्य हेतुः।

शक ॥ सिद्धार्थकं निर्द्दिश्य ॥ अमात्य, प्रियसुहृदा सिद्धार्थकेन घातकान् विद्राव्य, बध्यस्थानादपवाहितोऽस्मि।

राक्ष ॥ सहर्षं ॥ भद्र सिद्धार्थक, कामसपर्य्याप्तमिदमस्य प्रियस्य; तथापि गृह्यतामिति ॥ स्वगात्रादवतार्य्य भूषणानि प्रयच्छति ॥

सिद्धा ॥ गृहीत्वा पादयोर्निपत्य, स्वगतं ॥ एदं क्खु अज्जो वदेसेन करिस्सं ॥प्रकाशं॥ अमच्च, एत्थ मे पढमपविट्ठस्स णत्थि कोवि परिचिदो, जस्सिं एदं अमच्चस्स प्पसादं णिक्खिविअ णिव्वुदो भविस्सं; ता इच्छामि अहं इमाए मुद्दिआए मुद्दिदं अमच्चस्सज्जेव्व भाण्डागारे णिक्खिविदुं, जदा मे एदिणा पओअणं भविस्सदि, तदा गेह्णिस्सं (१)।

राक्ष। भद्र, भवतु, को दोषः। शकटदास एवं क्रियतां।

---

(१) इदं खलु आर्य्योपदेशेन करिष्यामि। अमात्य, अत्र मे प्रथमप्रविष्टस्य नास्ति कोऽपि परिचितः, यत्रेमं अमात्यस्य प्रसादं निक्षिप्य निर्व्वृतो भवामि; तस्मादिच्छाम्यहं एतया मुद्रया मुद्रितममात्यस्यैव भाण्डागारे निक्षेप्तुं; यदा ममैतेन प्रयोजनं भविष्यति, तदा ग्रहीष्यामि।

शक। यदाज्ञापयत्यमात्य इति ॥ मुद्रां विलोक्य जनान्तिकं ॥ अमात्य, अमात्यनामाङ्कितेयं मुद्रा।

राक्ष ॥ विलोक्य, सविषादं सवितर्कमात्मगतं ॥ कष्टं मदुत्कण्ठाविनोदार्थं नगरान्निष्क्रामतो मम हस्ताद्ब्राह्मण्या गृहीता। तत् कथमस्य हस्तमुपगता ॥ प्रकाशं ॥ भद्र सिद्धार्थक, कुतस्त्वयेयमधिगता।

सिद्धा। अमच्च, अत्थि कुसुमपुरनिवासी मणिआरसेट्ठी चन्दनदासो नाम, तस्स गेहदुआरे पडिदा, मए समासादिदा (१)।

राक्ष। युज्यते।

सिद्धा। अमच्च, किं एत्थ जुज्जदि? (२)

राक्ष। भद्र, यतो महाधनानां द्वारि पतितस्यैवंविधस्योपलब्धिरिति।

शक। सखे सिद्धार्थक, अमात्यनामाङ्कितेयं मुद्रा; तदितो बहुतरेणार्थेन भवन्तममात्यस्तोषयिष्यतीति, तद्दीयतामेषा मुद्रा।

---

(१) अमात्य, अस्ति कुसुमपुरनिवासी मणिकारश्रेष्ठी चन्दनदासो नाम, तस्य गेहद्वारे निपतिता मया समासादिता।

(२) अमात्य, किमत्र युज्यते?

सिद्धा। अज्ज, एसो मे परितोसो, जं अमच्चो इमाए मुद्दाए परिग्गहप्पसादं करोदित्ति (१)।

॥ मुद्रां समर्पयति ॥

राक्ष। सखे शकटदास, अनयैव मुद्रया स्वाधिकारे व्यवहर्त्तव्यं भवता।

शक। यदाज्ञापयत्यमात्य इति।

सिद्धा। अमच्च, विस्सवेमि किंपि (२)

राक्ष। भद्र, विस्रब्धं ब्रूहि।

सिद्धा। जाणादि ज्जेव्व अमच्चो, जधा चाणक्कहदअस्स विप्पिअं कदुअ, णत्थि मे पुणो पाडलिउत्ते प्पवेसोत्ति; ता इच्छामि अहं अज्जस्स सुप्पसण्णे पादे सेविदुं (३)।

राक्ष। भद्र, प्रियं नः, किन्तु त्वदभिप्रायापरिज्ञानेनान्तरितोऽस्माकमनुनयः। तदेवं क्रियतां।

---

(१) आर्य्य, एष मे परितोषो, यदस्या मुद्राया अमात्यः परिग्रहप्रसादं करोति।

(२) अमात्य, विज्ञापयामि किमपि।

(३) जानात्येवामात्यो, यथा चाणक्यहतकस्य विप्रियं कृत्वा, नास्ति मे पुनः पाटलिपुत्रे प्रवेश, इति; तस्मादिच्छाम्यहं अमात्यस्यैव सुप्रसन्ने चरणे सेवितुं।

सिद्धा॥ सहर्षं॥ अणुग्गहिदोह्मि।

राक्ष। सखे शकटदास, विश्रामय सिद्धार्थकं।

शक। यदाज्ञापयत्यमात्य इति ॥सिद्धार्थकेन सह निष्क्रान्तः॥

राक्ष। सखे विराधगुप्त, वर्णये दानीं कुसुमपुरवृत्तान्तशेषं अपि क्षमन्ते कुसुमपुरनिवासिनोऽस्मदुपजापांश्चन्द्रगुप्तप्रकृतयः।

विरा। अमात्य, बाढं क्षमन्ते, ननु यथाप्रधानमनुगच्छन्त्येव।

राक्ष। सखे, किं तत्र कारणं?

विरा। अमात्य, इदं तत्र कारणं; मलयकेतोरपक्रमणात् प्रभृति पीडितश्चन्द्रगुप्तेन चाणक्य इति; चाणक्योऽपि अतिजितकाशितयाऽसहमानस्तैस्तैराज्ञाभङ्गैश्चन्द्रगुप्तस्य चेतसः पीडामुपचिनोति; अयमपि समानुभवः।

राक्ष ॥सहर्षं॥ सखे विराधगुप्त, तद्गच्छ त्वमननाहितुण्डिकच्छद्मना पुनः कुसुमपुरभेदं प्रति, तत्र हि मे सुहृद्वैतालिकव्यञ्जनः स्तनकलसो नाम प्रतिवसति, स त्वया मद्वचनाद्वाच्यः; यथा चाणक्येन क्रियमाणेष्वाज्ञाभङ्गेषु चन्द्रगुप्तस्त्वया समुत्तेजनसमर्थैः श्लोकैरुपश्लोकयितव्य इति। कार्य्यञ्चातिनिभृतं करभकहस्तेन सन्देष्टव्यमिति।

विरा। यदाज्ञापयत्यमात्य इति ॥ निष्क्रान्तः ॥

॥ प्रविश्य पुरुषः ॥ जअदु, जअदु, अमच्चो; अमच्च, सअड दासो विण्णवेदि, एदे क्खु, तिण्णि अलङ्कारविसेसा विक्कीअन्ति, ता पच्चक्खीकरेदु अमच्चो (१)।

राक्ष ॥ विलोक्यात्मगतं ॥ अहो महार्हाण्याभरणानि। ॥ प्रकाशं ॥ भद्र, उच्यतां शकटदासः, परितोष्य विक्रेतारं, गृह्यतामिति।

पुरु। जं अमच्चो आणवेदित्ति ॥ निष्क्रान्तः ॥

राक्ष ॥ स्वगतं ॥ यावदहमपि कुसुमपुराय करभकं प्रेषयामि ॥ उत्थाय ॥ अपि नाम दुरात्मनश्चाणक्यहतकात् चन्द्रगुप्तो भिद्येत, अथवा सिद्धमेव समीहितं पश्यामि। कुतः।

मौर्य्यस्तेजसि सर्व्वभूतमनुजामाज्ञापको वर्त्तते,
चाणक्योऽपि मदाश्रयादयमभूद्राजेति जातस्मयः;
राज्यप्राप्तिकृतार्थमेकमपरं तीर्णप्रतिज्ञार्णवं,
सौहार्द्दात् कृतकृत्यतैव नियतं लब्धान्तरा भेत्स्यति।

॥ इति निष्क्रान्ताः सर्व्वे ॥

॥ इति द्वितीयोऽङ्कः ॥

---

(१) जयतु, जयतु, अमात्यः; अमात्य, शकटदासो विज्ञापयति। एते खलु त्रयोऽलङ्कारविशेषा विक्रीयन्ते, तस्मात् प्रत्यक्षीकरोत्वमात्य इति।

—

॥ अथ तृतीयोऽङ्कः ॥

॥ ततः प्रविशति कञ्चुकी ॥

कञ्चु।

रूपादीन्विषयान्निरूप्य करणैर्यैरात्मलाभस्त्वया
लब्धस्तेष्वपि चक्षुरादिषु हताः स्वार्थावबोधक्रियाः,
अङ्गानि प्रसभं त्यजन्ति पटुतामाज्ञाविधेयानि मे,
न्यस्तं मूर्ध्नि पदं तवैव जरया, तृष्णे, मुधा माद्यसि।

॥परिक्रम्याकाशे॥ भो भोः सुगाङ्गप्रासादाधिकृताः पुरुषाः, सुगृहीतनामा देवश्चन्द्रगुप्तो वः समाज्ञापयति। यथा, प्रवृत्त कौमुदीमहोत्सवरमणीयतरं कुसुमपुरमवलोकयितुमिच्छामि, तत्क्रियन्तामस्मद्दर्शनयोग्याः सुगाङ्गप्रासादस्योपरि भूमय, इति॥ आकाशे आकर्ण्य॥ किं कथयन्ति भवन्तः। आर्य्य, किमविदित एवायं देवस्य चन्द्रगुप्तस्य कौमुदीमहोत्सवप्रतिषेध इति? आः दैवोपहताः, किमनेन वः प्राणहरेण कथोद्घातेन। शीघ्रमिदानीं,

आलिङ्गन्तु गृहीतधूपसुरभीन् स्तम्भान् पिनद्धस्रज
स्संपूर्णेन्दुमयूखसंहतिरुचां सम्पामराणां श्रियः,

सिंहाक्रान्तमनवारणाच्च सुचिरं सञ्जातमूर्च्छामिव,
क्षिप्रं चन्दनवारिणा सकुसुमः सेकोऽनुतिष्ठतात् गां।

॥ आकाशे ॥ किं कथयन्ति भवन्तः? एते त्वरामहइति। भद्रास्त्वरध्वं अयमागतएवचन्द्रगुप्तः, यएषः,।

सुविश्रम्भैरङ्गैः पथिषु विषमेष्वप्यचलता
चिरं धुर्य्येणोढा गुरुरपि भुवो याऽस्य गुरुणा,
धुरं तामेवोच्चैर्नववयसि वोढुं व्यवसितो,
मनस्वी दम्यत्वात् स्खलति, न च दुःखं वहति च।

॥ नेपथ्ये ॥ इतइतो देवः।

॥ ततः प्रविशति राजा प्रतीहारी च ॥

राजा ॥ स्वगतं ॥ राज्यं हि नाम राजधर्मानुवृत्तिपरतन्त्रस्य भूपतेर्महदप्रीतिस्थानं। यतः।

परार्थानुष्ठाने जडयति नृपं स्वार्थपरता,
परित्यक्तस्वार्थो नियतमयथार्थः क्षितिपतिः;
परार्थश्चेत् स्वार्थादभिमततरो, हन्त परवान्,
परायत्तः प्रीतेः कथमिव रसं वेत्ति पुरुषः।

अपि च। दुराराध्या हि राजलक्ष्मीरात्मवद्भिरपि राजभिः। कुतः। तीक्ष्णादुद्विजते मृदौ, परिभवत्रासान्न सन्तिष्ठते,
मूर्खान् द्वेष्टि, न गच्छति प्रणयितामत्यन्तविद्वत्स्वपि,।
शूरेभ्योऽप्यधिकं बिभेत्युपहसत्येकान्तभीरूनहो
श्रीर्लब्धप्रसरेव वेशवनिता दुःखोपचर्या भृशं।

अन्यच्च। कृतककलहं कृत्वा, स्वतन्त्रेण च त्वया कञ्चित् कालं व्यवहर्त्तव्यमित्यार्य्योपदेशः; स च कथमपि मया पातकमिवाभ्युपगतः, अथवा शश्वदार्य्योपदेशसंस्क्रियमाणमतयः सदैव स्वतन्त्रा वयं। कुतः।

इह विरचयन् साध्वीं शिष्यः क्रियां न निवार्य्यते,
त्यजति च यदा मार्गं मोहात्तदा गुरुरङ्कुशः;
विनयरुचयस्तस्मात्सन्तः सदैव निरङ्कुशाः,
परमपि यतः स्वातन्त्र्येभ्यो वयं हि पराङ्मुखाः।

॥ प्रकाशं ॥ आर्य्य वैहीनरे, सुगाङ्गप्रासादमार्गमादेशय।

कञ्चु। इतइतो देवः।

राजा॥ परिक्रामति॥

कञ्चु॥ परिक्रम्य॥ अयं सुगाङ्गप्रासादः शनैरारोढुमर्हत्यार्य्यः।

राजा॥ नाट्येनारुह्य दिशोऽवलोक्य च॥ अहो शरत्समयसंभृतशोभाविभूतीनां दिशामतिरमणीयता। कुतः।

शनैः शान्ता भूताः सितजलधरच्छेदपुलिनाः,
समन्तादाकीर्णाः कलविरुतभिः सारसकुलैः,
चिताश्चित्राकारैर्निशि विकचनक्षत्रकुमुदै-
र्नभस्तः स्यन्दन्ते सरित इव दीर्घा दश दिशः।

अपिच।

अपामुद्वृत्तानां निजमुपदिशन्त्याः स्थितिपदं,
दधत्या शालीनामवनतिमुदारे सति फले;

मयूराणामुग्रं विषमिव हरन्त्या मदमहो
कृतः कृत्स्नस्यायं विनय इव लोकस्य शरदा।

अपिच।

भर्त्तुस्तया कलुषितां बहुवल्लभस्य
मार्गं कथञ्चिदवतार्य्य तनूभवन्तीं
सर्व्वात्मना रतिकथाचतुरेव दूती
गङ्गां शरन्नयति सिन्धुपतिं प्रसन्नां।

॥ समन्तादायेनावलोक्य॥ अये, कथमप्रवृत्तकौमुदीमहोत्सवं कुसुमपुरं पश्यामि? आर्य्य वैहीनरे, त्वयास्मद्वचनादाघोषितः कुसुमपुरे कौमुदीमहोत्सवः।

कञ्चु। देव, अथकिं? आघोषितो वै देवस्याज्ञया कुसुमपुरे कौमुदीमहोत्सवः।

राजा। आर्य्य, तत् किं न परिगृहीतमस्मद्वचनं पौरजनेन?

कञ्चु॥ कर्णौ पिधाय॥ देव, शान्तं पापं, शान्तं पापं, पृथिव्यामस्खलितपूर्व्वं देवस्य शासनं, कथं पौरेषु स्खलितुमर्हति?

राजा। आर्य्य वैहीनरे, तत् कथमप्रवृत्तकौमुदीमहोत्सवमद्यापि कुसुमपुरं पश्यामि। पश्य।

धूर्त्तैरन्वीयमानाः स्फुटचतुरकथाकोविदैर्व्वेशनार्य्यो
नालंकुर्व्वन्ति रथ्याः पृथुजघनभराक्रान्तिमन्दैः प्रयातैः?
अन्योन्यं स्पर्द्धमाना न च गृहविभवैः स्वामिनो मुक्तशङ्काः,
साकं स्त्रीभि र्जन्ते विधिमभिलषितं पार्व्वणं पौरमुख्याः?

कञ्चु। देव एवमेतत्।

राजा। किमेतत्?

कञ्चु। आं देव इदं।

राजा। आर्य्य, स्फुटमभिधीयतां।

कञ्चु। देव, प्रतिषिद्धः कौमुदीमहोत्सवः।

राजा॥ सक्रोधं॥ आर्य्य, आः केन?

कञ्चु। नातः परमस्माभिर्देवो विज्ञापयितुं शक्यते।

राजा। न खलु आर्य्यचाणक्येनापहृतः प्रेक्षकाणामतिशय रमणीयश्चक्षुषो विषयः?

कञ्चु। देव कोऽन्यो जीवितुकामो देवस्य शासनमुल्लङ्घयिष्यति?

राजा। शोणोत्तरे, उपवेष्टुमिच्छामि।

प्रती। देव एदं सिंहासणं, उपविसदु देवो (१)।

राजा॥ नाट्येनोपविश्य॥ आर्य्य वैहीनरे, आर्य्यचाणक्यं द्रष्टुमिच्छामि।

कञ्चु। यदाज्ञापयति देवइति॥ निष्क्रान्तः॥

॥ ततः प्रविशति आसनस्थः स्वभवनगतः कोपानुविद्धां चिन्तां नाटयंश्चाणक्यः॥

चाण॥ आत्मगतं॥ कथं स्पर्द्धते मया सह दुरात्मा राक्षसहतकः। कुतः।

---

(१) इदं सिंहासनमुपविशतु देवः।

कृतागाः कौटिल्यो भुजग इव निर्याय नगरा
द्यथा नन्दं हत्वा नृपतिमकरोन्मौर्य्यवृषभं,
तथाहं मौर्य्येन्दोः श्रियमपहरामीति कृतधीः,
प्रभावं मद्बुद्धेरतिशयितुमेष व्यवसितः।

॥ प्रत्यक्षवदाकाशे लक्ष्यं बध्वा ॥ राक्षस, राक्षस, विरम्यताम स्मादुर्व्यवसितात्। कुतः;

उत्सिक्तः कुसचिवदृष्टराज्यभारो,
नन्दोऽसौ न भवति चन्द्रगुप्त एषः;
चाणक्यस्त्वमपि च नैव केवलं ते
साधर्म्यं मदनुकृतेः प्रधानवैरं।

॥ विचिन्त्य ॥ अथवा, नातिमात्रमस्मिन्वस्तुनि मया मनः खेद यितव्यं। कुतः;

मद्भृत्यैः किल नाम पर्व्वतसुतो व्याप्तः, प्रलब्धान्तरै
रुद्युक्ताश्च नियोगसाधनविधौ सिद्धार्थकाद्याः स्पशाः।
कृत्वा संप्रति कैतवेन कलहं मौर्य्येन्दुना, राक्षसं
भेत्स्यामि स्वमतेन, भेदकुशलो ह्येष प्रतीपं द्विषः।

॥ प्रविश्य ॥ कञ्चुकी। कष्टा खलु सेवा नाम। कुतः।

भेतव्यं नृपतेस्ततः सचिवतो राज्ञस्ततो वल्लभा
दन्येभ्यश्च भवन्ति येऽस्य भवने लब्धप्रसादा विटाः।
दैन्यादुन्मुखदर्शनेन लुठनैः पिण्डार्थमायास्यतः
सेवां लाघवकारिणीं कृतधियः स्थाने श्ववृत्तिं विदुः।

॥ परिक्रम्यावलोक्य च ॥ इदमार्य्यचाणक्यस्य गृहं, यावत् प्रविशामि ॥ नाट्येन प्रविश्यालोक्य च ॥ अहो राजाधिराज मन्त्रिणो गृहभूतिः। कुतः;

उपलशकलमेतद्भेदकं गोमयानां;
वटुभिरुपहृतानां वर्हिषां स्तोममेतत्;
शरणमपि समिद्भिः शुष्यमाणाभिराभि
र्विनमितपटलान्तं दृश्यते जीर्णकुड्यं।

ततः स्थाने खल्वस्य वृषलो देवश्चन्द्रगुप्त इति। कुतः।

स्तुवन्त्यश्रान्तास्याः क्षितिपतिमभूतैरपि गुणैः,
प्रवाचः कार्पण्याद्यदितिवितथवाचोऽपि कृतिनः;
प्रभावस्तृष्णायाः स खलु सकलः स्यादितरथा,
निरीहाणामीशस्तृणमिव तिरस्कारविषयः।

॥ विलोक्य सभयं ॥ तदयमार्य्यचाणक्यस्तिष्ठति।

यो नन्दमौर्य्यनृपयोः परिभूय लोक
मस्तोदयौ प्रतिदिशन्नविभिन्नकालं,
पर्य्यायपातितहिमोष्णमसर्व्वगामि
धाम्नातिशाययति धाम सहस्रधाम्नः।

॥ जानुभ्यां भूमौ निपत्य ॥ जयतु जयत्वार्य्यः।

चाण ॥ नाट्येनावलोक्य ॥ वैहीनर, किमागमनप्रयोजनं।

कञ्चु। आर्य्य, प्रणतिसंभ्रमसमुच्चलितभूमिपालमौलिमणि सकलशिखापिशङ्गीकृतपादपद्मयुगलः, पादयोरार्य्यं प्रणि

पत्य, देवश्चन्द्रगुप्तो विज्ञापयति, क्रियान्तरायमन्तरेणार्य्यं द्रष्टुमिच्छामीति।

चाण। वृषलो मां द्रष्टुमिच्छति; वैहीनरे, न खलु वृषलस्य श्रवणमुपगतोऽयं मया कृतः कौमुदीमहोत्सवप्रतिषेधः?

कञ्चु। आर्य्य अथकिं?

चाण॥ सक्रोधं॥ आः, केन कथितं?

कञ्चु॥ भयं नाटयित्वा॥ प्रसीदत्वार्य्यः, स्वयमेव सुगाङ्ग प्रासादशिखरगतेन देवेनावलोकितमप्रवृत्तकौमुदीमहोत्सवं कुसुमपुरं।

चाण। आः, ज्ञातः तिष्ठ, तावद्भवद्भिरेव मदन्तरेण प्रोत्साह्य रोषितो वृषलः; किमन्यत्?

कञ्चु॥ सभयं तूष्णीमधोमुखस्तिष्ठति॥

चाण। अहो राजपरिजनस्य चाणक्यस्योपरि विद्वेषपक्षपातः। अथ क्व वृषलस्तिष्ठति?

कञ्चु॥ भयं नाटयन्॥ आर्य्य, सुगाङ्गप्रासादगतेन देवेनाहमार्य्यपादमूलं प्रेषितः।

चाण॥ उत्थाय॥ कञ्चुकिन्, सुगाङ्गप्रासादमार्गमादेशय।

कञ्चु। इतइत आर्य्य इति॥ उभौ परिक्रामतः॥

कञ्चु। अयं सुगाङ्गप्रासादः, शनैः शनैरारोढुमर्हत्यार्य्यः।

चाण॥ नाट्येनावरुह्यावलोक्य च सहर्षमात्मगतं॥ अये, सिंहासनमध्यास्ते वृषलः; साधु, साधु;

नन्दैर्विमुक्तमनपेक्षितराजवृत्ते
रध्यासितञ्च वृषलेन वृषेण राज्ञां,
सिंहासनं सदृशपार्थिवसङ्गतञ्च,
प्रीतिं परां त्रिगुणयन्ति गुणा ममैते।

॥ उपसृत्य ॥ विजयतां वृषलः।

राजा॥ सिंहासनादुत्थाय चाणक्यस्य पादौ गृहीत्वा॥ आर्य्य, चन्द्रगुप्तः प्रणमति।

चाण॥ पाणौ गृहीत्वा॥ उत्तिष्ठोत्तिष्ठ वत्स।

आशैलेन्द्राच्छिलान्तःस्खलितसुरधुनीशीकरासारशीता
दातीरान्नैकरागस्फुरितमणिरुचो दक्षिणस्यार्णवस्य,
आगत्यागत्य भीतिप्रणतनृपशतैः शश्वदेव क्रियन्तां
चूडारत्नांशुगर्भास्तव चरणयुगस्याङ्गुलीरन्ध्रभागाः।

राजा। आर्य्यप्रसादादनुभूयत एवैतत् नाशास्यते। उपविशत्वार्य्य इति॥ उभौ यथासनमुपविष्टौ॥

चाण। वृषल, किमर्थं वयमाहूताः?

राजा। आर्य्यस्य दर्शनेनात्मानमनुग्रहीतुं।

चाण॥ स्मितं कृत्वा॥ वृषल, अलमनेन प्रश्रयेण, न निष्प्रयोजनमधिकारवन्तः प्रभुभिराहूयन्ते; तत्प्रयोजनमभिधीयतां।

राजा। आर्य्य, कौमुदीमहोत्सवप्रतिषेधस्य किं फलमार्य्यः पश्यति?

चाण ॥ स्मितं कृत्वा ॥ वृषल, उपालब्धुं तर्हि वयमाहूताः।

राजा। आर्य्य, नोपालब्धुं, किं तर्हि विज्ञापयितुं।

चाण। वृषल, यद्येवं तर्हि विज्ञापनीयानामवश्यं शिष्येण रुचयोऽनुरोद्धव्याः।

राजा। आर्य्य, कः सन्देहः; किन्तु न कदाचिदपि आर्य्यस्य निष्प्रयोजना रुचिः प्रवर्त्तयिष्यतइति अस्ति नः प्रश्नावकाशः।

चाण। वृषल, सम्यग्गृहीतवानसि; नहि प्रयोजनमनवेक्ष्यमाणः स्वप्नेऽपि चाणक्यो रुचिं प्रवर्त्तयिष्यति।

राजा। आर्य्य, अतएव मां प्रयोजनशुश्रूषा मुखरयति।

चाण। वृषल श्रूयतां; इह खल्वर्थशास्त्रकारास्त्रिविधसिद्धिमुपवर्णयन्ति। तद्यथा, राजायत्तां, सचिवायत्तां उभयायत्ताञ्चेति, तत् सचिवायत्तसिद्धेर्भवतः किं फलमन्वेषणेन वाक्प्रसयोः खेदमुत्पादयितुं, यतो वयमेवात्र नियुक्ता वेत्स्यामः।

राजा ॥ सकोप इव मुखं परिवर्त्तयति ॥

॥ ततो नेपथ्ये वैतालिकौ पठतः ॥

एकः।

आकाशं काशपुष्पच्छविमभिभवता भस्मना शुक्लयन्ती,
शीतांशोरंशुजालैर्जलधरमलिनां क्लिन्दती कृत्तिमैभीं,
कापालीमुद्वहन्ती स्रजमिव धवलां कौमुदीमित्यपूर्व्वा
हासश्रीराजहंसा हरतु तनुरिव क्लेशमैशी शरद्वः।

अपिच।

प्रत्यग्रोन्मेषजिह्मा क्षणमनभिमुखी रत्नदीपप्रभाणा
मात्मव्यापारगुर्व्वी जनितजललवा, जृम्भितैः साङ्गभङ्गैः
नागाङ्कं मोक्तुमिच्छोः शयनमुरुफणाचक्रवालोपधानं
निद्राच्छेदाभिताम्रा चिरमवतु हरेर्दृष्टिराकेकरा वः ।

द्वितीयः ।

सर्व्वोत्कर्षस्य धात्रा निधय इव कृताः केऽपि कस्यापि हेतो
र्जेतारः स्वेन धाम्ना मदसलिलमुचां नागयूथेश्वराणां ;
दंष्ट्राभङ्गं मृगाणामधिपतय इव व्यक्तमानावलेपा
नाज्ञाभङ्गं सहन्ते नृवर नृपतयस्त्वादृशाः सार्व्वभौमाः ।

अपि च । भूषणाद्युपभोगेन प्रभुर्भवति न प्रभुः ।
परैरपरिभूताज्ञस्त्वमिव प्रभुरुच्यते

चाण ॥ आकर्ण्यात्मगतं ॥ प्रथमं, तावद्विशिष्टदेवतारूपकेण प्रवृद्धशरद्गुणप्रख्यापनमिदमाशीर्व्वचनं ; इदमपरं किमिति नावधारयामि ॥ विचिन्त्य ॥ आं, ज्ञातं ; राक्षसस्यायं प्रयोगः । आ दुरात्मन् राक्षसहतक दृश्यसे, जागर्त्ति खलु कौटिल्यः ।

राजा । आर्य्य वैहीनरे दीयतामाभ्यां वैतालिकाभ्यां सुवर्णशतसहस्रं ।

कञ्चु । यदाज्ञापयति देव इति ॥ उत्थाय परिक्रामति ॥

चाण ॥ सक्रोधं ॥ वैहीनरे, तिष्ठ, तिष्ठ, न गन्तव्यं । वृषल, किमयमस्थानएव महानर्थोत्सर्गः क्रियते?

राजा। आर्य्येणैवं सर्व्वतो निरुद्धचेष्टाप्रसरस्य मम बन्धन मिव राज्यं, न राज्यमिव।

चाण। वृषल, स्वयमनभियुक्तानां राज्ञामेते दोषा भवन्ति। तद्यदि न सहसे, तदा स्वयमेवाभियुज्यस्व।

राजा। एते वयं स्वकर्म्मण्यभियुज्यामहे।

चाण। प्रियं नः; वयमपि स्वकर्म्मण्यभियुज्यामहे।

राजा। यद्येवं; तर्हि कौमुदीमहोत्सवप्रतिषेधस्य प्रयोजनं श्रोतुमिच्छामि।

चाण। वृषल, कौमुदीमहोत्सवानुष्ठानस्य किं प्रयोजन मित्यहमपि श्रोतुमिच्छामि।

राजा। प्रथमं तावन्ममाज्ञाया व्याघातः।

चाण। वृषल, ममापि खलु त्वदाज्ञाव्याघातएव कौमुदीमहोत्सवप्रतिषेधस्य प्रथमं प्रयोजनमिति। कुतः।

अम्भोधीनां तमालप्रभवकिशलयश्यामवेलावनाना
मापारेभ्यश्चतुर्णां चटुलतिमिकुलक्षोभितान्तर्जलानां,
मालेवाज्ञा सपुष्पा नतनृपतिशतैरुह्यते या शिरोभिः,
सा मय्येव स्खलन्ती प्रथयति, विनयालंकृतं ते प्रभुत्वं।

राजा। अथापरमपि प्रयोजनं यत्तच्छ्रोतुमिच्छामि।

चाण। तदपि कथयामि।

राजा। कथ्यतां।

चाण। शोणोत्तरे, शोणोत्तरे, मद्वचनात् कायस्थमचल दत्तं ब्रूहि, यत्तद्भद्रभटप्रभृतीनां लेख्यपत्रं तत्तावद्दीयतामिति।

प्रती। जं अज्जो आणवेदित्ति॥ निष्क्रम्य पुनः प्रविश्य॥ अज्ज एदं पत्तं।

चाण॥ गृहीत्वा॥ वृषल श्रूयतां।

राजा। दत्तावधानोऽस्मि।

चाण॥ वाचयति॥ सुगृहीतनामधेयस्य देवस्य चन्द्रगुप्तस्य सहोत्थायिनां प्रधानपुरुषाणां इतोऽपक्रम्य मलयकेतुमाश्रितानां परिमाणलेख्यपत्रं। तत्र प्रथमं, तावत्, गजाध्यक्षो भद्रभटः, अश्वाध्यक्षः पुरुषदत्तः, महाप्रतीहारस्य चन्द्रभानस्य भागिनेयो डिङ्गुरातः, देवस्य स्वजनगन्धी महाराज बलगुप्तः, देवस्यैव कुमारसेवको राजसेनः, सेनापतेः सिंहबलदत्तस्य कनीयान् भ्राता भागुरायणः, मालवराजपुत्रो रोहिताक्षः, क्षत्रगणमुख्यतमो विजयवर्मेति। एतावदेतत् पत्रं।

राजा। आर्य्य, एतेषामपरागहेतून् श्रोतुमिच्छामि।

चाण। वृषल श्रूयतां; अत्र यावेतौ गजाध्यक्षाश्वाध्यक्षौ भद्रभटपुरुषदत्तनामानौ, एतौ खलु स्त्रीमद्यमृगयाशीलौ हस्त्यश्वान्वेषणे ह्यनभियुक्ताविति, अधिकाराभ्यामनारोप्य, स्वजीवनमात्रेणैव स्थापितावित्यपरक्तौ, स्वेन स्वेन चाधिकारेण व्यवस्थाप्य मलयकेतुमाश्रितौ। यावेतौ डिङ्गुरातबलगुप्तौ ताव

प्यत्यन्तलुब्धप्रकृती, दत्तं धनमवज्ञ मन्यमानौ, प्राक्प्रतिज्ञापितप्रदानेऽप्यपरितुष्यमाणौ, तत्र बहु लभ्यत इति मलयकेतुमाश्रितौ। योऽप्यसौ भवतः कुमारसेवको राजसेनः, सोऽपि तव प्रसादादतिप्रभूतं कोषहस्त्यश्वं सहसैव सुमहदैश्वर्य्यं प्राप्य, पुनरुच्छेदाशङ्कयापक्रम्य मलयकेतुमाश्रितः। योऽयमपरः सेनापतेः सिंहबलदत्तस्य कनीयान् भ्राता भागुरायणः, असावपि तत्र काले पर्व्वतकेन सह समुत्पन्नसौहार्द्दः तत्प्रीत्या च, पिता ते चाणक्येन घातित इति रहसि त्रासयित्वा, मलयकेतुमपवाहितवान्; ततो भवदपथ्यकारिषु चन्दनदासप्रमुखेषु निगृह्यमाणेषु, स्वदोषाशङ्कयापक्रम्य मलयकेतुमाश्रित; तेनाप्यसौ ममानेन प्राणाः परिरक्षिता इति कृतज्ञतामनुवर्त्तमानेन पैतृकस्य परिचयमात्मनोऽनन्तरममात्यपदं ग्राहितः। यावेतौ रोहिताक्षविजयवर्म्माणौ, तावत्यन्तमानित्वात् स्वदायादेभ्यस्त्वया बहुसमानं दीयमानमसहमानौ, मलयकेतुमाश्रितौ। इत्येषामपरागहेतवः।

राजा। आर्य्य, एवमेतेषु परिज्ञातापरागहेतुष्वपि क्षिप्रमेव कस्मान्न प्रतिविहितमार्य्येण।

चाण। वृषल, न पारितं प्रतिविधातुं।

राजा। किमकौशलादुत प्रयोजनापेक्षितया वा।

चाण। कथमकौशलं भविष्यति; नियतं प्रयोजनापेक्षितया।

राजा। तदप्रतिविधानप्रयोजनं श्रोतुमिच्छामि।

चाण। वृषल, श्रूयतामवधार्य्यताञ्च।

राजा। उभयमपि क्रियते; कथ्यतां।

चाण। वृषल, खल्विह विरक्तानां प्रकृतीनां द्विविधं प्रतिविधानं,तद्यथानुग्रहो,निग्रहश्चेति। अनुग्रहस्तावदाचिप्ताधिकारयोर्भद्रभटपुरुषदत्तयोः पुनरधिकारारोपणमेव; अधिकारश्च पुनस्तादृशेषु व्यसनदोषादनभियुक्तेषु पुनरारोप्यमाणः, सकलस्यैव राज्यस्य मूलं हस्त्यश्वमवसादयति। डिङ्गुरातबलगुप्तयोरत्यन्तलुब्धप्रकृतिकयोः, सकलराज्यसम्प्रदानेनाप्यपरितुष्यतोरनुग्रहः कर्त्तुं न शक्यते। राजसेनभागुरायणयोस्तु स्वधनप्राणनाशभीतयोः कुतोऽनुग्रहस्यावकाशः? लोहिताक्षविजयवर्म्मणोरपि दायादमानप्रदानपीडितयोरत्यन्तमानिनोर्म्मानमप्यपमानं मन्यमानयोः, कीदृशोऽनुग्रहः प्रीतिं जनयिष्यतीति; परिहृतः पूर्व्वः पक्षः। उत्तरोऽपि खलु वयमचिरादधिगतनन्दैश्वर्य्याः सहोत्थायिनं प्रधानपुरुषवर्गमुग्रेण दण्डेन पीडयन्तो, नन्दकुलानुरक्तानां प्रकृतीनामविश्वास्या, माभूमेत्यतः परिहृत एव, तदेवमुपगृहीतास्मद्भृत्यपक्षो, राक्षसोपदेशश्रवणप्रवणो महीयसा म्लेच्छराजबलेन परिवृतः, पितृवधामर्षितः पर्व्वतकपुत्त्रो मलयकेतुरस्मानभियोक्तुमुद्यतइति, सोऽयं व्यायामकालो नोत्सवकालइति। अतो दुर्गसंस्कारे प्रारब्धव्ये किं कौमुदीमहोत्सवेनेति प्रतिषिद्धः।

राजा। आर्य्य, बहु प्रष्टव्यमत्र।

चाण। वृषल, विश्रब्धं पृच्छ, ममापि वक्तव्यमत्र।

राजा। एष पृच्छामि।

चाण। अहमप्येष कथयामि।

राजा। योऽयमस्माकमस्य सर्व्वस्यैवानर्थहेतुर्मलयकेतुः स कस्मादार्य्येणापक्रामन्नुपेक्षितः।

चाण। वृषल, मलयकेतोरपक्रमणोपेक्षणे द्वयी गतिः, स्यात्; अनुगृह्येत निगृह्येत वा। अनुग्रहे पूर्व्वप्रतिश्रुतं राज्यार्द्धं प्रतिपाद्येत। निग्रहे तावदस्य पर्व्वतकोऽस्माभिर्व्यापादित इति। कृतघ्नतायाः स्वयंस्वहस्तो दत्तः स्यात्, प्रतिश्रुतार्द्धराज्यप्रतिदानेऽपि पर्व्वतकविनाशः केवलं कृतघ्नतामात्रफलः स्यात्, इति मलयकेतुरपक्रामन्नुपेक्षितः।

राजा। आर्य्य, अत्र तावदेवं राक्षसः पुनरिहैवान्तर्नगरे वर्त्तमान आर्य्येणोपेक्षित इत्यत्र किमुत्तरमार्य्यस्य?

चाण। वृषल, राक्षसोऽपि खलु निजस्वामिनि स्थिरानुरागत्वात्, सुचिरमेकत्र संवासाच्च, ज्ञातशीलानां नन्दकुलानुरक्तानां प्रकृतीनामत्यन्तविश्वास्यः, प्रज्ञापुरुषकाराभ्यामुपेतः, सहायसम्पदा युक्तः, कोषबलवानिहैवान्तर्नगरे वर्त्तमानो महान्तं खल्वन्तःकोपमुत्पादयेत्। दूरीकृतस्तु, वाह्यकोपमुत्पादयन्नपि न दुःखसाध्यो भविष्यतीत्यतोऽपक्रामन्नुपेक्षितः।

राजा। तत्किमर्थमिहस्थ एवोपायैर्नोपक्रान्तः।

चाण। अथ कथमुपक्रान्तो भविष्यति। ननूपायैरेवासौ

हृदयेशयः शङ्कुरिवोद्धृत्य दूरीकृतः। दूरीकरणस्य चोक्तं प्रयोजनं।

राजा। आर्य्य, कस्मादिक्रम्य न गृहीतः?

चाण। वृषल, राक्षसः खल्वसौ विक्रम्य निगृह्यमाणः स्वयं वा विनश्येत्, युष्मद्बलानि वा विनाशयेत्; एवं सत्युभयथापि दोषः। पश्य।

स हि भृशमभियुक्तो यद्युपेयाद्विनाशं,
ननु वृषल वियुक्तस्तादृशेनापि पुंसा
अथ तव बलमुख्यान्नाशयेत्, सापि पीडा;
वनगजइव तस्मात्सोऽभ्युपायैर्विनेयः।

राजा। न शक्नुमो वयमार्य्यस्य वाचा वाचमतिशयितुं; सर्व्वथा अमात्यराक्षसएवात्र प्रशस्यतरः।

चाण॥ सक्रोधं॥ न भवानिति वाक्यशेषः। मा तावदेवं; भो वृषल तेन किं कृतं?

राजा। यदि न ज्ञायते, तदा श्रूयतां; तेन खलु महात्मना,
लब्धायां पुरि यावदिच्छमुषितं कृत्वा, पदं नो गले
व्याघातो जयघोषणादिषु बलादस्मद्बलानां कृतः,
अत्यर्थं विपुलः स्वनीतिः विभवैः संमोहमापादिता,
विश्वास्येष्वपि विश्वसन्ति मतयो न स्वेषु वर्गेषु नः।

चाण॥ विहस्य॥ वृषल, एतत्कृतं राक्षसेन?

राजा। अथ किं; एतत् कृतममात्यराक्षसेन।

चाण। वृषल, मया पुनर्ज्ञातं, नन्दमिव भवन्तमुद्धृत्य, भवानिव भूतले मलयकेतुरधिराज्यमारोपितः।

राजा। सत्तमुपालभ्य। आर्य्य, दैवेनेदमनुष्ठितं, किमत्रा र्य्यस्य।

चाण। हे मत्सरिन्!

आरुह्यारूढकोपस्फुरणविषमिताग्राङ्गुलीमुक्तचूडां,
लोकप्रत्यक्षमुग्रां, सकलरिपुकुलोच्छेददीर्घां प्रतिज्ञां,
केनान्येनावलिप्ता नवनवतिशतद्रव्यकोटीश्वरास्ते,
नन्दाः, पर्य्यायभूताः, पशवइव हताः, पश्यतो राक्षसस्य?

अपिच।

गृध्रैराबद्धचक्रं वियति बलनया दीर्घनिष्कम्पपक्षे,
धूमैर्ध्वस्तार्कभासां सघनमिव दिशां मण्डलं दर्शयन्तः,
नन्दानां नन्दयन्तः पितृवननिलयान् प्राणिनः, पश्य,चैत्या,
निर्व्वान्त्यद्यापि नैते स्रुतबहलवसावाहिनो हव्यवाहाः।

राजा। नन्दकुलविद्वेषिणा दैवेनेदमनुष्ठितं।

चाण। दैवमविद्वांसः प्रमाणयन्ति।

राजा। विद्वांसोऽप्यविकत्थना भवन्ति?

चाण ॥क्रोधं नाटयन्॥ वृषल, वृषल, भृत्यमिव मामारोढु मिच्छसि।

शिखां बद्धां मोक्तुं मम पुनरयं धावति करः।

॥ भूमौ पादप्रहारं कृत्वा॥

प्रतिज्ञामारोढुं पुनरपि चलत्येष चरणः।

प्रणाशान्नन्दानां प्रशममुपयातं त्वमधुना,
परीतः कालेन, ज्वलयसि पुनः क्रोधदहनं।

राजा ॥ सावेगं स्वगतं ॥ अये तत्कथं सत्यमेव कुपित आर्य्यः। तथाहि।

संरम्भस्पन्दिपक्ष्मक्षरदमलजलक्षालनक्षामयापि,
भ्रूभङ्गोद्भूतधूमं ज्वलितमिव पुनः पिङ्गया नेत्रभासा,
मन्ये, रुद्रस्य रौद्रं रसमभिनयतस्ताण्डवे संस्मरन्त्या,
सञ्जातोदग्रकम्पं कथमपि धरया धारितः पादघातः।

चाण॥ कृतकं कोपं संहृत्य ॥ वृषल, वृषल, अलमुत्तरोत्तरेण यद्यस्मत्तो वरीयान् राक्षसोऽवगम्यते, तस्मादिदं शस्त्रं तस्मै दीयतामिति ॥ शस्त्रमुत्सृज्योत्थाय च प्रत्यक्षवदाकाशे लक्ष्यं बद्ध्वा स्वगतं॥ राक्षस, राक्षस, एष एव भवतः कौटिल्यबुद्धिविजिगीषोर्बुद्धेः प्रकर्षः।

चाणक्यतः स्खलितभक्तिमहं सुखेन
जेष्यामि मौर्य्यमिति संप्रति यः प्रयुक्तः
भेदः, किलैष भवता सकलः, स एव
सम्पत्स्यते, शठ, तवैव विनाशनाय।

॥ इति निष्क्रान्तश्चाणक्यः ॥

राजा। आर्य्य वैहीनरे, अद्यप्रभृति अनादृत्य चाणक्यं, चन्द्रगुप्तः स्वयमेव राज्यकार्य्याणि करिष्यतीति, गृहीतार्थाः प्रकृतयः क्रियन्तां।

कञ्चु॥स्वगतं॥कथं निरुपपदमेव चाणक्यो नार्य्यचाणक्य इति।

हन्त सत्यमेव हृतोऽधिकारः। अथवा न खल्वत्र वस्तुनि, दैव दोषमवगन्तुमर्हामि।

स दोषः सचिवस्यैव, यदसत् कुरुते नृपः,
याति यन्तुः प्रमादेन गजो व्यालत्ववाच्यतां।

राजा। आर्य्य, किं विचारयसि?

कञ्चु। देव, न किञ्चिद्विचारयामि। किं त्वेतद्विज्ञापयामि, दिष्ट्या देव इदानीं देवः सम्वृत्त इति।

राजा ॥ आत्मगतं॥ एवमस्मासु निगृह्यमाणेषु स्वकार्य्यसिद्धिकामः, सकामो वा भवत्वार्य्यः ॥प्रकाशं॥ शोणोत्तरे, अनेन शुष्ककलहेन शिरोवेदना मां वाधते, तच्छयनगृहमादेशय।

प्रती। एदु एदु महाराओ।

राजा॥ आसनादुत्थायात्मगतं॥

आर्य्याज्ञयैव मम लङ्घितगौरवस्य
बुद्धिः प्रवेष्टुमवनेर्व्विवरं प्रवृत्ता
ये सत्यमेव न गुरून् प्रतिमानयन्ति,
तेषां कथं नु हृदयं न भिनत्ति लज्जा।

॥ इति निष्क्रान्ताः सर्व्वे॥

॥ इति तृतीयोऽङ्कः॥

—



## ॥ चतुर्थोऽङ्कः ॥

॥ ततः प्रविशत्यध्वगवेशः पुरुषः ॥

पुरु। ही माणहे, हीमाणहे, जोश्रणसश्र समधिश्रं को णाम गदागदं इह करेइ, श्रत्याणगमणगुरुइ पऊणो श्रणा जइ ण होइ? ता जाव श्रमचरक्खसस्सज्जेव्व गेहं गच्छामि॥ परिश्रान्तवत्परिक्रम्य ॥ का एत्य दुश्रारिश्राणं णिवेदध दाव भट्टिणो श्रमचरक्खसस्स, एसो क्खु करहको करहका विश्र कज्जतुवरन्तो पाटलिपुत्तादो श्रागदोत्ति (१)।

॥ प्रविश्य ॥ दौवारिकः। भद्द, मा उच्चं मन्तेहि, एसो क्खु भट्टा श्रमचरक्खसो रज्जचिन्ताजणिदेण जाश्ररेण समुप्पणसीसवेश्रणो; श्रज्जवि दाव ण सश्रणदलं मुञ्चदि, ता चिट्ठ मुहुत्तश्रं, जाव से लद्धावसरो भविश्र, भवदो श्रागमणं णिवेदेमि (२)।

---

(१) आश्चर्य्यमिति; योजनशतं समधिकं को नाम गतागतमिह करोति, अस्थानगमनगुरुका प्रभोराज्ञा यदि न भवति? तद्यावत् अमात्यराक्षसस्यैव गेहं गच्छामि। कोऽत्र दौवारिकाणां निवेदयत तावद्भर्तुरमात्यराक्षसस्य, एष खलु करभकः करभकइव कार्य्यत्वरावान् पाटलिपुत्रादागत इति।

(२) भद्र मा उच्चं मन्त्रय एष खलु भर्त्ता अमात्यराक्षसः

पुरुषः। भद्दमुह जधा दे रोचदि (१)।

॥ ततः प्रविशति शयनगतश्चासनगतेन शकटदासेनानुगम्यमानश्चिन्तितो राक्षसः ॥

राक्ष॥ आत्मगतं॥

मम विमृषतः कार्य्यारम्भे विधेरविधेयतां,
सहजकुटिलां कौटिल्यस्य प्रचिन्तयतो मतिं;
अथ च विहिते तत्कृत्यानां निकाममुपग्रहे,
कथमिदमिहेत्युन्निद्रस्य प्रयात्यनिशं निशाः।

अपि च।

कार्य्योपक्षेपमादौ, तनुमपि रचयंस्तस्य विस्तारमिच्छन्,
बीजानां गर्भितानां फलमतिगहनं गूढमुद्भेदयंश्च,
कुर्व्वन् बुद्ध्या विमर्षं प्रसृतमपि, पुनः संहरन् कार्य्यजातं,
कर्त्ता वा नाटकानामिममनुभवति क्लेशमस्मद्विधो वा।

तदपि नाम दुरात्मा चाणक्यवटुः–

॥ उपसृत्य ॥ दौवारिकः। जअदु, जअदु!

राक्ष। अभिसन्धातुं शक्यः स्यात्–

---

कार्य्यचिन्ताजनितजागरेण समुत्पन्नशीर्षवेदनोऽद्यापि न तावन्मुञ्चति शयनतलं; तस्मात्तिष्ठ तावन्मुहूर्त्तं, यावत्तस्य लब्धावसरं भूत्वा, भवतश्चागमनं निवेदयामि।

(१) भद्रमुख, यथा ते रोचते।

दौवा। अमच्चो।

राक्ष ॥ वामाक्षिस्पन्दं सूचयित्वा स्वगतं ॥ चाणक्यव टुर्ज्जयति; अभिसन्धातुं शक्यः स्यादमात्यः ॥ प्रकाशं ॥ भद्र, किमसि वक्तुकामः।

दौवा। अमच्च, एसो क्खु करभओ पाडलिपुत्तादो आअ दो, इच्छदि अमच्चं पेक्खिदुं (१)।

राक्ष। अवारितं प्रवेशयैनं।

दौवा। जं अमच्चो आणवेदित्ति ॥ निष्क्रम्य पुरुषमुपसृत्य ॥ भद्द, एसो अमच्चो चिट्ठदि, ता उपसप्प णं (२)।

॥ इति निष्क्रान्तो दौवारिकः।

करभकः ॥ राक्षसमुपसृत्य ॥ जअदु, जअदु, अमच्चो।

राक्ष ॥ नाट्येनावलोक्य ॥ भद्र करभक, स्वागतमुपविश्यतां।

कर। जं अमच्चो आणवेदित्ति ॥ भूमावुपविशति ॥

राक्ष ॥ स्वगतं ॥ अथ कस्मिन् प्रयोजने मयाऽयं प्रणिधिः प्रहितइति; प्रभूतत्वात् प्रयोजनानां न खल्ववधारयामि।

॥ इति चिन्तां नाटयति ॥

॥ ततः प्रविशति वेत्रपाणिरपरः पुरुषः ॥

---

(१) अमात्य, एष खलु करभकः पाटलिपुत्रादागतस्तदि च्छति अमात्यं प्रेक्षितुं।

(२) भद्र, एष खलु अमात्यस्तिष्ठति, तदुपसर्प एनं

पुरुषः। ओसलध, अज्जा, ओसलध; अवेध, माणहे; अवेध, किं ण पेक्खध;

दूले पचासत्ती दंसणमवि दुल्लहं अधखेहिं,

कल्लाणकुलघराणं देवाणच्च भूमिदेवाणं।

॥ आकाशे॥ अज्ज, किं भणाध, किंणिमित्तं ओसारणा करोअदि। अज्ज, एसो क्खु कुमालो मलयकेदू, समुप्पणसीसवेअणं अमच्चरक्खसं सुणिअ, पेक्खिदुं इदज्जेव्व आअच्छदि। ता एदिणा कालणेण ओसालणा करीअदि (१)॥ इति निष्क्रान्तः पुरुषः॥

॥ ततः प्रविशति भागुरायणेन सह कञ्चुकिनानुगम्यमानो मलयकेतुः॥

मल॥ निश्वस्यात्मगतं॥ अद्य दशमो मासस्तातस्योपरतस्य, न चास्माभिर्वृथापुरुषकारमुद्वहद्भिस्तमुद्दिश्य, तोयाञ्जलिरप्यावर्ज्जितः; अथवा प्रतिज्ञातमेतत् पुरस्तात्।

---

(१) अवसरत, हे आर्य्याः, अवसरत, अवेत, हे मान्याः, अवेत; किं न पश्यत। दूरे प्रत्यासत्तिर्दर्शनमपिदुर्लभमधन्यैः, कल्याणकुलगृहाणां देवानाञ्च भूमिदेवानां। हे आर्य्य, किं भणथ, किं निमित्तमेषा अपसरणा क्रियते। आर्य्य, एष खलु कुमारो मलयकेतुः, समुत्पन्नशीर्षवेदनं अमात्यं श्रुत्वा, इतएव द्रष्टुं आगच्छति। एतेन कारणेन अवसरणा क्रियते।

वक्षस्ताडनभिन्नरत्नवलयं भ्रष्टोत्तरीयांशुकं
हाहेत्युच्चरितार्त्तनादकरुणं भूरेणुरूक्षालकं ;
तादृक्प्राप्तजनस्य शोकजनितं सम्भ्रान्त्यवस्थान्तरं ;
शत्रुस्त्रीषु मया विधाय गुरवे देयो निवापाञ्जलिः ।

तत्किमिह वहुना ।

उद्यच्छता धुरमकापुरुषानुरूपा,
गन्तव्यमाजिविनिहितेन पितुः पथा वा,
आच्छिद्य वा स्वजननीजनलोचनेभ्यो,
नेयो मया रिपुवधूनयनानि वाष्पः ।

॥ प्रकाशं ॥ आर्य्य जाजले, उच्यन्तामस्मदनुयायिनो राजानः, एकएवाहममात्यराक्षसस्यातर्कितागमनेन प्रीतिमुत्पादयितुमिच्छामि ; अतः कृतमनुगमनक्लेशेनेति ।

कञ्चु । यदाज्ञापयति कुमारः ॥ परिक्रम्याकाशे ॥ भो भो राजानः, कुमारः समाज्ञापयति, न खल्वहं केनचिदनुगन्तव्य इति ॥ विलोक्य सहर्षं ॥ कुमार, कुमार, एते भवदाज्ञासमनन्तरमेव प्रतिनिवृत्ताः सर्व्वएव राजानः, पश्यतु हि कुमारः।

शीतस्पर्शैः स्कन्धदेशैर्मुखरकविकयाकर्षणात्यर्थभुग्नै
रश्वाः कैश्चिन्निरुद्धाः खमिव खुरपुटैः खण्डयन्तः पुरस्तात् ;
कैश्चिन्मातङ्गमुख्यैर्विहितजवतया मूकघण्टैर्निवृत्ता ;
मर्य्यादां भूमिपाला जलधयइव ते देव नोल्लङ्घयन्ति ।

मल। आर्य्य आजले, त्वमपि सपरिजनो निवर्त्तस्व, भागुरायण एकएव मामनुगच्छतु।

कञ्चु। यदाज्ञापयति कुमार इति॥ सपरिजनो निष्क्रान्तः॥

मल। सखे भागुरायण, विज्ञापितोऽहमिहागच्छद्भिर्भद्रभटप्रभृतिभिः, यथा न वयं अमात्यराक्षसद्वारेण कुमारमाश्रयामहे, किन्तु कुमारस्य सेनापतिं शिखरसेनं द्वारीकृत्य, दुष्टामात्यपरिगृहीताच्चन्द्रगुप्तादपरक्ताः सन्तः, कुमारमाभिरामिकगुणयुक्तमाश्रयणीयमाश्रयामहइति, तन्न मया सुचिरमपि विचारयता तेषां वाक्यार्थोऽधिगतः।

भागु। कुमार, नैवायमत्यन्तदुर्व्बोधार्थः; पश्य, विजिगीषुरात्मगुणसम्पन्नः प्रियहितद्वारेणाश्रयणीयइति, ननु न्याय्य एवायं।

मल। सखे भागुरायण, नन्वस्माकममात्यराक्षसः प्रियतमो, हिततमश्च।

भागु। कुमार एवमेतत् किन्तु अमात्यराक्षसश्चाणक्ये बद्धवैरो न तु चन्द्रगुप्ते; तद्यदि कदाचिच्चन्द्रगुप्तश्चाणक्यमतिजितकाशिनमसहमानः साचिव्यादवरोपयेत्, ततो नन्दकुलभक्त्या नन्दान्वयएवायमिति कृत्वा, संपत्सुहृज्जनापेक्षया च, अमात्यराक्षसश्चन्द्रगुप्तेन सह सन्दधीत; चन्द्रगुप्तोऽपि, पितृ

पारम्पर्य्यागतएवायमिति कृत्वा, सन्धिमनमन्वीत, एवं सत्यस्मा स्वपि कुमारो न विश्वसेदित्ययमेषां वाक्यार्थः।

मल। युज्यते, सखे भागुरायण, अमात्यराक्षसस्य गृहमार्ग मादेशय।

भागु। इतइतः कुमार इति॥ उभौ परिक्रामतः॥

भागु। कुमार, इदममात्यराक्षसस्य गृहं, प्रविशतु कुमारः।

मल। एष प्रविशामि इति॥ प्रवेशकं नाटयतः॥

राक्ष। आं स्मृतं॥ प्रकाशं॥ भद्र, अपि दृष्टस्त्वया कुसुम पुरे वैतालिकः स्तनकलसः।

कर। अमच, अधइं?

मल। सखे भागुरायण, कुसुमपुरवृत्तान्तो वर्त्तते; तन्नो पसर्प्पावः; शृणुवस्तावत् किङ्कारणमिति।

मन्त्रभङ्गभयाद्राज्ञां कथयन्त्यन्यथा पुरः,
अन्यथा विवृतार्थेषु स्वैरालापेषु मन्त्रिणः॥

भागु। यदाज्ञापयति कुमारः।

राक्ष। भद्र, अपि तत् कार्य्यं सिद्धं।

कर। अमचस्स प्पसाएण सिद्धं।

मल। सखे भागुरायण, किं तत्कार्य्यं?

भागु। कुमार, गहनः खलु सचिववृत्तान्तो, नैतावता परिच्छेत्तुं शक्यते। अवहितस्तावत् श्रोतुमर्हति कुमारः।

राक्ष। भद्र, विस्तरेण श्रोतुमिच्छामि।

कर। सुणादु अमच्चो, अत्थि दाव अहं अमच्चेणाणत्तो, जधा, करभअ, करभअ, कुसुमपुरं गच्छिअ, भणिदव्वो मम वअणेण तुए वेतालिओ त्थणकलसो, जधा, चाणक्कहतकेण तेसुं तेसुं आणाभङ्गेसुं अणुचिट्ठीअमाणेसुं, चन्दउत्तो समुत्ते अणसमत्थेहिं सिलोएहिं उवसिलोअइदव्वोत्ति (१)।

राच। ततस्ततः?

कर। तदो मए पाडलिउत्तं गच्छिअ, सुणाविदो अमच्चस्स सन्देसो वेतालिअत्थणकलसो (२)।

राच। ततस्ततः?

कर। एत्थन्तरे णन्दकुलविणासदुम्मणस्स पोरजणस्स परिओसं समुप्पाअन्तेण चन्दउत्तेण आघोसिदो, कुसुमउरे, कोमुदीमहोसवो; सोवि चिरआलपवत्तमाणजणिदपरिओसो; अहि

---

(१) शृणोतु अमात्यो अस्ति तावत् अहममात्येनाज्ञप्तो यथा करभक करभक कुसुमपुरं गत्वा मम वचनेन भणितव्यो वैतालिकः स्तनकलसकः यथा चाणक्यहतकेन तेषु तेषु आज्ञाभङ्गेषु अनुष्ठीयमानेषु चन्द्रगुप्तः समुत्तेजनसमर्थैः श्लोकैरुपश्लोकयितव्यः।

(२) ततो मया पाटलिपुत्रं गत्वा, श्रावितः अमात्यसन्देशं वैतालिकः स्तनकलसः।

मदबन्धुजणसमागमो विश्च, सम्मिणेदं वज्रमाणदो णश्चर जणेण (१)।

राच॥ सवाष्पं॥ हा देव नन्द!

कौमुदीकुमुदानन्दे जगदानन्दहेतुना,

कीदृशी सति चन्द्रेऽपि नृपचन्द्र त्वया विना।

भद्र, ततस्ततः?

कर। अमच, तदो से लोअलोअणानन्दभूदो अणिच्छन्तस्स ज्जेव तधा णाअरजनस्स णिवारिदो चाणक्कहतकेण कौमुदी महूसवो; एत्थन्तरे त्थणकलसेण पउत्ता चन्दउत्तस्स समुत्ते अण समत्था सिलोअपरिवाडी (२)।

राच॥ सहर्षं॥ साधु, सखे स्तनकलस, साधु, काले भेदवीज मुप्तमवश्यमेव फलमुपदर्शयिष्यति। यतः।

---

(१) अचान्तरे नन्दकुलविनाशदुर्मनसः पौरजनस्य परितोषं समुत्पादयता चन्द्रगुप्तेन आघोषितः, कुसुमपुरे, कौमुदी महोत्सवः, सोऽपि चिरकालप्रवर्त्तमानजनितपरितोषः, अभिमतबन्धुजनसमागमइव, सस्नेहं वज्रमानितः पौरजनेन।

(२) अमात्य, ततः स लोकलोचनानन्दभूतोऽनिच्छतएव नागरजनस्य निवारितश्चाणक्यहतकेन कौमुदीमहोत्सवः; अचान्तरे स्तनकलसेन प्रवृत्ता चन्द्रगुप्तस्य समुत्तेजनसमर्था श्लोकपरिपाटी।

भद्यः क्रीडारसच्छेदं प्राकृतोऽपि न मर्षयेत्;
किमु लोकाधिकं धाम बिभ्राणाः पृथिवीभुजः।

मल। एवमेतत्। भद्यः क्रीडेत्यादि पुनः पठति।

राक्ष। ततस्ततः?

कर। तदो, चन्दउत्तेण आणाभङ्गकलुसिदहिअएण, सुइरं अमच्चगुणेप्पसंसिअ पब्भंसिओ, अहिआरादो चाणक्कहदओ(१)।

मल। सखे भागुरायण, गुणप्रशंसया, दर्शितचन्द्रगुप्तेन राक्षसे भक्तिपक्षपातः।

भाग। कुमार, न तथा गुणप्रशंसया, यथा चाणक्यवटो निराकरणेन।

राक्ष। भद्र, किमयमेवैकः कौमुदीमहोत्सवप्रतिषेधश्चन्द्रगुप्तस्य चाणक्यं प्रति कोपकारणमुतान्यदप्यस्ति।

मल। सखे भागुरायण, चन्द्रगुप्तस्य अपरकोपकारणान्वेषणे किं फलमेष पश्यति?

भागु। कुमार, एतत् फलं पश्यति, अतिमतिमांश्चाणक्यः, निष्प्रयोजनमेव किमिति चन्द्रगुप्तं कोपयिष्यति; नच कृतवेदी चन्द्रगुप्त एतावता गौरवमुल्लङ्घयिष्यति; सर्व्वथा चाणक्यचन्द्रगुप्तयोः पुष्कलात्कारणाद्यो विश्लेष उत्पद्यते, स आत्यन्तिको भविष्यतीति।

---

(१) ततश्चन्द्रगुप्तेनाज्ञाभङ्गकलुषितहृदयेन, सुचिरममात्यगुणं प्रशस्य, प्रभ्रंशितोऽधिकारात् चाणक्यहतकः।

कर। अमच, अत्थि अण्णाइं पि चन्दउत्तस्स कोवकारणाइं चाणक्के (१)।

राक्ष। किं किं?

कर। जधा, पढमं दाव उवेक्खिदो अणेण अवक्कमन्तो कुमारो मलयकेदू अमचरक्खसो अ (२)।

राक्ष॥ सहर्षं॥ सखे शकटदास हन्त, हस्ततलगतः सम्प्रति चन्द्रगुप्तो भविष्यति।

शक। इदानीं चन्दनदासस्य बन्धनान्मोक्षः, भवता च पुत्रदारैः सह समागमः, जीवसिद्धिप्रभृतीनां क्लेशच्छेदः।

भागु॥ आत्मगतं॥ जातः सत्यं जीवसिद्धेः क्लेशच्छेदः।

मल। सखे भागुरायण, हस्ततलगतो मे सम्प्रति चन्द्रगुप्तो भविष्यतीति व्याहरतः, कोऽयमस्याभिप्रायः?

भागु। किमन्यत्, चाणक्यादपकृष्टस्य चन्द्रगुप्तस्योद्धरणे सौकार्य्यमवश्यमवगच्छति।

राक्ष। भद्र, हृताधिकारः साम्प्रतं क्वासौ वटुः?

कर। तहिंज्जेव्व पाडलिपुत्ते पडिवसदि (३)।

---

(१) अमात्य अस्ति अन्यदपि कोपकारणं चाणक्ये।

(२) यथा प्रथमं तावदुपेक्षितः अनेनापक्रामन् कुमारो मलयकेतुः अमात्यराक्षसश्च।

(३) तस्मिन्नेव पाटलिपुत्ते प्रतिवसति।

राक्ष॥ सावेगं॥ भद्र, तत्रैव प्रतिवसति, न तपोवनं गतः; प्रतिज्ञां वा न पुनः समारूढवान्।

कर। अमच्च, तपोवणं गमिस्सदित्ति सुणीअदि (१)।

राक्ष॥ सावेगं॥ शकटदास, नेदमुपपद्यते। पश्य;

देवस्य येन पृथिवीतलवासवस्य,
साग्रासनापनयजा निकृतिर्न सोढा,
सोऽयं स्वयंकृतनराधिपतेर्मनस्वी,
मौर्य्यात् कथं नु परिभूतिमिमां सहेत।

मल। सखे भागुरायण, चाणक्यस्य तपोवनगमने पुनः प्रतिज्ञारोहणे वा कास्य स्वार्थसिद्धिः।

भागु। कुमार, नायमत्यन्तदुर्बोधोऽर्थः, यावद्यावन्निरपेक्षश्चाणक्यहतकश्चन्द्रगुप्ताद्दूरीभवति तावत्तावदस्य स्वार्थसिद्धिः।

शक। अमात्य, अलमत्यन्तविकल्पितेन; एतदुपपद्यत एव कुतः पश्यत्वमात्यः

राज्ञां चूडामणीन्दुद्युतिखचितशिखे मूर्द्ध्नि विन्यस्तपादः,
स्वैरेवोत्पद्यमानं किमिति विषहते मौर्य्य आज्ञाविघातं?
कौटिल्यः कोपनोऽपि स्वयमतिचरणे ज्ञातदुःखः प्रतिज्ञां,
दैवात् पूर्णप्रतिज्ञः पुनरपि न करोत्यायतिज्यानिभीतः।

राक्ष। सखे शकटदास, एवमेतत्। तद्गच्छ विश्रामय करभकं।

शक। यदाज्ञापयत्यमात्य इति ॥ करभकेण सह निष्क्रान्तः॥

---

(१) अमात्य तपोवनं गमिष्यतीति श्रूयते।

राक्ष। अहमपि कुमारं द्रष्टुमिच्छामि।

मल। अहमेवार्य्यं द्रष्टुमागतः।

राक्ष ॥ नाट्येनावलोक्य॥ अये कुमार एवागतः॥ आसना दुत्थाय॥ इदमासनमुपवेष्टुमर्हति कुमारः।

मल। अहमुपविशामि; उपविशत्वार्य्य इति॥ यथासन मुपविष्टौ।

मल। आर्य्य, अपि सह्या शिरोवेदना?

राक्ष। कुमारस्याधिराजशब्देनातिरस्कृते कुमारशब्दे, कुतः शिरोवेदनायाः सह्यता?

मल। स्वयमुरीकृतमेतदार्य्येण न दुष्प्रापं भविष्यति; तत् कियन्तं कालमस्माभिरेवं संभृतबलैरपि शत्रुव्यसनमवेक्षमाणै रुदासितव्यं?

राक्ष। कुमार, कुतोऽद्यापि कालहरणस्यावकाशः; प्रतिष्ठस्व रिपुजयाय।

मल। अमात्य, अपि किञ्चित् शत्रोर्व्यसनमुपलब्धं?

राक्ष। गाढमुपलब्धं।

मल। कीदृशं?

राक्ष। सचिवव्यसनं; किमन्यत् व्यसनं; अपकृष्टश्चाणक्या च्चन्द्रगुप्तः।

मल। अमात्य सचिवव्यसनमव्यसनमेव।

राक्ष। कुमार, अन्येषां भूपतीनां कदाचिदमात्यव्यस नमव्यसनमपि स्यात्, न पुनश्चन्द्रगुप्तस्य।

मल। आर्य्य, ननु विशेषतश्चन्द्रगुप्तस्येति।

राक्ष। किं कारणं यदस्यामात्यव्यसनमव्यसनं।

मल। चन्द्रगुप्तप्रकृतीनां हि चाणक्यदोषाएवापराग हेतवः; तस्मिन्निराकृते प्रथममपि चन्द्रगुप्तानुरक्ताः प्रकृतय, इदानीं पुनः सुतरामेव तत्रानुरागं दर्शयिष्यन्ति।

राक्ष। कुमार नैवेदं; इह द्विप्रकाराः प्रकृतयश्चन्द्र गुप्तसहोत्थायिन्यो, नन्दकुलानुरक्ताश्च; तत्र चन्द्रगुप्तसहोत्था यिनीनां प्रकृतीनां चाणक्यदोषाएव विरागहेतवो, न नन्द कुलानुरक्तानां; तास्तु खलु नन्दकुलमनेन पितृकुलभूतं कृतघ्नं कृतघ्नेन घातितमित्यपरागामर्षाभ्यां विप्रकृताः सत्यः, स्वाश्रय मलभमानाश्चन्द्रगुप्तमेवानुवर्त्तन्ते; त्वादृशं पुनः प्रतिपक्षोद्धरणे सम्भावितशक्तिमभियोक्तारमासाद्य, क्षिप्रमेनं परित्यज्य, त्वामे वाश्रयन्ते इति। अत्र कुमारस्य वयमेव निदर्शनं।

मल। अमात्य, किमेतदेवैकं सचिवव्यसनमभियोगकारणं चन्द्रगुप्तस्य? आहोस्विदन्यदप्यस्ति।

राक्ष। कुमार, किमन्यैर्बहुभिरपि, एतद्धि तत्र प्रधान तमं।

मल। अमात्य, कथं प्रधानतमं नाम; किमिदानीं चन्द्र गुप्तः स्वराज्यकार्य्यधुरमन्यत्र मन्त्रिण्यात्मनि वा समासज्य, स्वयं प्रतिविधातुमसमर्थः स्यात्?

राक्ष। वाढमसमर्थएव।

मल। किङ्कारणं?

राक्ष। स्वायत्तसिद्धिषु, उभयायत्तसिद्धिषु, वा भूमिपालेषु, कदाचिदेतत् सम्भवति, नतु चन्द्रगुप्ते। चन्द्रगुप्तस्तु दुरात्मा, नित्यं सचिवायत्तसिद्धावेवावस्थितश्चक्षुर्विकल इवाप्रत्यक्षसर्व्वलोकव्यवहारः, कथमिव स्वयं प्रतिविधातुं समर्थः स्यात्। कुतः;

अत्युच्छ्रिते मन्त्रिणि, पार्थिवे च, विष्टभ्य पादावुपतिष्ठते श्रीः;
सा स्त्रीस्वभावादसहा भरस्य तयोर्द्वयोरेकतरं जहाति।

अपिच॥

नृपोऽपकृष्टः सचिवात्तदर्पणस्तनन्धयोऽत्यन्तशिशुः स्तनादिव,
अदृष्टलोकव्यवहारमूढधीर्मुहूर्त्तमप्युत्सहते न वर्त्तितुं।

मल॥ आत्मगतं॥ दिष्ट्या न सचिवायत्ततन्त्रोऽस्मि॥ प्रकाशं॥ अमात्य, यद्यप्येवं तथापि खलु बह्वष्वभियोगकारणेषु सत्सु, सचिवव्यसनमभियुञ्जानस्य शत्रुमभियोक्तुरैकान्तिकी सिद्धिर्भवति।

राक्ष॥ ऐकान्तिकीमेव सिद्धिमवगन्तुमर्हति कुमारः। कुतः।

त्वय्युत्कृष्टबले, ऽभियोक्तरि नृपे, नन्दानुरक्ते पुरे,
चाणक्ये चलिताधिकारविमुखे, मौर्य्ये नवे राजनि,
स्वाधीने मयि। इत्यर्द्धोक्ते लज्जां नाटयन्॥
स्वाधीने मयि मार्गमात्रकथनव्यापारयोग्योद्यमे;
त्वद्वाञ्छान्तरितानि सम्प्रति विभो तिष्ठन्ति साध्यानि नः।

मल। अमात्य, यद्येवमभियोगकालममात्यः पश्यति, तत्किमास्यते; पश्य,

उत्तुङ्गास्तुङ्गकूलं स्रुतमदसलिलाः प्रस्यन्दिसलिलं,
श्यामाः श्यामोपकण्ठद्रुममलिमुखराः कल्लोलमुखरं,
स्रोतःखातावसीदत्तटमुरुदशनैरुत्सादिततटाः,
शोणं सिन्दूरशोणा मम गजपतयः पास्यन्ति शतशः।

अपिच। गम्भीरगर्जितरवाः स्वमदाम्बुमिश्र
मासारवर्षमिव सीकरमुद्गिरन्त्यः;
विन्ध्यं विकीर्णसलिलाइव मेघमाला,
रोत्स्यन्ति वारणघटानगरं मदीयाः।

॥ इति भागुरायणेन सह निष्क्रान्तो मलयकेतुः ॥

राच। कः कोऽत्र भोः।

॥ प्रविश्य ॥ पुरुषः। आणवेदु अमच्चो।

राच। प्रियम्वदक, ज्ञायतां साम्वत्सरिकाणां द्वारि कस्तिष्ठति।

प्रियं। जं अमच्चो आणवेदित्ति ॥ निष्क्रम्य चपणकं दृष्ट्वा पुनः प्रविश्य च ॥ अमच्च, एसो क्खु सम्वत्सरिओ खवणओ (१)।

---

(१) अमात्य एष, खलु साम्वत्सरिकः चपणकः।

राक्ष ॥ स्वगतं अनिमित्तं रूचयित्वा ॥ कथं प्रथममेव क्षप णकदर्शनं।

प्रियं। जीवसिद्धी।

राक्ष ॥ प्रकाशं ॥ अवीभत्सदर्शनं कारयित्वा, प्रवेशय।

प्रियं। जं अमचो आणवेदि इति ॥ निष्क्रान्तः ॥

॥ ततः प्रविशति क्षपणकः ॥

क्षप। सासणमलिहन्ताणं पडिवज्जह, मोहवाहि वेज्जाणं,

जे पढममेत्तकडुअं, पच्छा पत्थं उवदिसन्ति।

॥ उपसृत्य ॥ धम्मलाहो सावका भोदु (१)।

राक्ष। भदन्त, निरूप्यतां, तावदस्माकं प्रस्थानयोग्यदिवसः।

क्षप ॥ नाट्येन चिन्तयित्वा ॥ सावका, णिरूविदे मुहुत्ते; आमज्झह्णादो णिवुत्तसत्तकला सोहणा तिही, संपुण्णचन्दा पुण्णमासी, तुह्माणं उत्तलाए दिसाए दक्खिणं दिसं पत्थिदाणं, दक्खिणदुवालिओ णक्खत्तओ। अविअ।

अत्थाहिमूहे सूले, उदिदे संपुण्णमण्डले चन्दे,

गहवदबुहस्स लग्गे, उदिदत्थमिदह्मि केदुह्मि (२)।

---

(१) शासनमर्हतां प्रतिपद्यध्वं मोहव्याधिवैद्यानां।

ये प्रथममात्रकटुकं पश्चात् पथ्यमुपदिशन्ति।

धर्मलाभो भवतूपासकानां।

(२) हे धर्मोपासका निरूपितो मुहूर्त्तः आमध्याह्नात्

राक्ष। भदन्त, तिथिरेव तावत् न शुध्यति।

क्षप। सावका

एक्कगुणा होइ तिधी, चउग्गुणे होइ णक्खत्ते,

चउसत्तिगुणे लग्गो, एसे दोसदि सोमसिद्धंते।

लग्गो होइ सुलग्गो, कूलग्गाहं पलिहलिज्यासु,

पाविहि दीहलाहं चन्दस्स बलेण गच्छन्ते(१)।

राक्ष। भदन्त, अपरैः सांवत्सरिकैः सार्द्धं संवाद्यतां।

क्षप। संवादेदु सावके; अहं णिअं गेहं गमिस्सं(२)।

राक्ष। न खलु कुपिता भदन्तः।

क्षप। ण कुविदे तुह्माणं भदन्ते(३)।

---

निवृत्तसप्तकला शोभना तिथिः, सम्पूर्णचन्द्रा पौर्णमासी, युष्मा कमुत्तरस्यादिशो दक्षिणां दिशं प्रस्थितानां, दक्षिणद्वारिकं नक्षत्रं। अपिच।

अस्ताभिमुखे सूर्य्ये, उदिते सम्पूर्णमण्डले चन्द्रे,

गमनं बुधस्य लग्ने, उदितास्तमिते च केतौ।

(१) एकगुणा भवति तिथिश्चतुर्गुणं भवति नक्षत्रं,

चतुःषष्टिगुणं लग्नं, एतत् दृश्यति सोमसिद्धान्ते।

लग्नं भवति सुलग्नं, क्रूरग्रहं परिहर सत्वरं,

प्राप्स्यसि दीर्घलाभं चन्द्रस्य बलेन गच्छन्।

(२) संवादयतूपासकः अहं निजं गेहं गमिष्यामि।

(३) न कुपितो युष्माकं भदन्तः।

राक्ष। कस्तर्हि ?

क्षप ॥ स्वगतं ॥ णं भदन्ते भअवं कदन्ते, ॥ प्रकाशं ॥ जेण अत्तणो पक्खं उज्झिअ परपक्खं प्पमाणीकलेसि (१)।

॥ इति निष्क्रान्तः क्षपणकः ॥

राक्ष। प्रियम्वदक, ज्ञायतां का वेला वर्त्ततइति।

प्रियं। जं अमच्चो आणवेदित्ति ॥ निष्क्रम्य पुनः प्रविश्य च ॥ अत्याहिलासी भअवं सूले (२)।

राक्ष ॥ आसनादुत्थाय विलोक्य च ॥ अये अस्ताभिलाषो भगवान् सहस्रदीधितिः। तथाहि।

आविर्भूतानुरागाः क्षणमुदयगिरेरुज्जिहानस्य भानोः,
पत्रच्छायः पुरस्तादुपवनतरवो दूरमाश्वेव गत्वा,
एते तस्मिन्निवृत्ताः पुनरितरककुप्प्रान्तपर्य्यस्तबिम्बे,
प्रायोभृत्यास्त्यजन्ति प्रचलितविभवं स्वामिनं सेवमानाः।

॥ इति निष्क्रान्ताः सर्व्वे ॥

॥ चतुर्थोऽङ्कः ॥

---

(१) न भदन्तः, भगवान् कृतान्तः। येनात्मनः पक्षमुज्झित्वा परपक्षं प्रमाणीकरोषि।

(२) अस्ताभिलाषी भगवान् सूर्य्यः।

## ॥ अथ पञ्चमोऽङ्कः ॥

॥ ततः प्रविशति लेखमलङ्करणस्थलिकाञ्च समुद्रामादाय सिद्धार्थकः ॥

सिद्धा। ही हीमाणहे !

बुद्धिजलणिज्झरेहिं सिचन्ती देसकालकलसेहिं,

दंसइस्सदि अज्ज फलं गरुअं चाणक्कणीदिलदा।

गहिदो मए अज्ज चाणक्केण पढमलेहिदो लेहो, अमच रक्खसस्स मुद्दालंच्छिदे; तस्सज्जेव्व मुद्दालंच्छिदा इअं आहरणपेडिआ; चलिदोह्मि पाडलिउत्तं, ता जाव गच्छह्मि ॥ परिक्रम्यावलोक्य च॥ कहं खवणओ आअच्छदि ता? जाव मे असउणभूदं हि इमस्स दंसणं, ता आदिच्चदंसणेण पडिहणामि (१)।

---

(१) आश्चर्यं! बुद्धिजलनिर्झरैः सिच्यमाना देशकालकलसैः।

दर्शयिष्यति अद्य फलं गुरुकं चाणक्यनीतिलता।

गृहीतो मयाद्यचाणक्येन प्रथम लेखितो लेखः, अमात्य राक्षसस्य मुद्रालाञ्छितः; तस्यैव मुद्रालाञ्छिता इयं आभरणसमुद्रिका; चलितोऽस्मि पाटलिपुत्रं तद्यावत् गच्छामि। कथं क्षपणकआगच्छति? यावन्मे अशकुनभूतमिमस्य दर्शनं तस्मादादित्यदर्शनेन प्रतिहन्मि।

॥ ततः प्रविशति क्षपणकः ॥

अलिहन्ताणं पणमामो, जे दे गंभीलदाए बुद्धोए,

लोउत्तलेहिं लोए सिद्धिं मग्गेहिं मग्गन्ति (१)।

सिद्धा। भदन्त पणमामि (२)।

क्षप। उवासका, धम्मलाहो दे होदु॥ सिद्धार्थकं निर्व्वर्ण्य॥ उवासका, समुद्दसन्तलणकदव्यवसायं विअ दे हिअअं पेक्खामि (३)।

सिद्धा। कहं भदन्तो जाणादि (४)?

क्षप। उवासके, किं एत्थ जाणिदव्वं, णं एषज्जेव दे मग्गणाकण्णधारे लेहे सूचेदि (५)।

सिद्धा। जाणिदं भदन्तेण देसन्तलं चलिदोह्मि; ता कधेदु भदन्तो कोदिसो अज्ज दिअहो (६)।

---

(१) अर्हतां प्रणमामो, ये ते गम्भीरतया बुद्धेः,
लोकोत्तरैर्लोके सिद्धिं मार्गैर्मार्गयन्ति।

(२) भदन्त प्रणमामि।

(३) उपासक, धर्मलाभस्ते भवतु। उपासक, समुद्रसन्तरणकृतव्यवसायमिव ते हृदयं पश्यामि।

(४) कथं भदन्तो जानाति।

(५) उपासक, किमत्र ज्ञातव्यं; ननु एषएव ते मार्गणाकर्णधारो लेखः सूचयति।

(६) ज्ञातं भदन्तेन देशान्तरं चलितोऽस्मि; अथ कथयतु भदन्तः कीदृशोऽद्य दिवसः।

क्षप ॥ विहस्य ॥ उवासका, मुण्डं मुण्डिअ तुमं णक्खत्ताणि पुच्छसि (१)?

भिक्षुः। भदन्त, सम्पदंपि किं जादं ता कधेहि; जदि अत्त णो अणुऊलं भविस्सदि ता गमिस्सं; अणधा णिवत्तिस्सं (२)।

क्षप। उवासकाणं सम्पदं एदस्सिं मलअकेदुकडए, अणुऊलं, अणणुऊलं वा, अगहीदमुद्दो ण गच्छीअदि (३)।

भिक्षुः। भदन्त, तदो कधं क्खु दाणीं?

क्षप। उवासका णिसामेहि; पढमं दाव एत्थ मलअकेदुकडए लोअस्स अणिवालिअ णिग्गमपवेसा आसी; दाणीं इदो पच्चासण्णे कुसुमउरे, ण कोऽवि अमुद्दालंच्छिदो णिक्कमिदुं पविसिदुं वा अणुमोदीअदि; ता जदि भागुरायणस्स मुद्दालंच्छिदोऽसि, तदो गच्छ वीसत्थो; अणधा णिव्वत्तिअ णिउक्कण्ठं चिट्ठ, मा तुमं गुम्मट्ठाणाधिवेहिं संजमिदकलचलणो राअउलं प्पवेसीअसि (४)।

(१) उपासक, मुण्डं मुण्डयित्वा त्वं नक्षत्राणि पृच्छसि?

(२) भदन्त साम्प्रतमपि किं जातं तत्कथय; यदि अनुकूलं भवेत् तदा गमिष्यामि, अन्यथा निवर्त्तिष्ये।

(३) उपासकानां साम्प्रतमेतस्मिन् मलयकेतुकटकं, अनुकूलमननुकूलम्वा, अगृहीतमुद्रो न गच्छति।

(४) उपासक निशामय; प्रथमं तावदत्र कटके लोकस्य अनिवारितनिष्क्रमणप्रवेशः आसीत्; इदानीं इतः प्रत्यासन्ने कुसुमपुरे, न कोऽपि अमुद्रालाञ्छितो निष्क्रमितुं प्रवेष्टुं वा अनुमो

सिद्धा। किं ण आणादि भदन्तो, जधा अमच रक्खसस्स केलिअरो मन्तिओ सिद्धत्यओ अहत्ति; ता अमुद्दालंछिदं पि मं णिक्कमन्तं कस्स सत्ती णिवारेदुं (१)?

चप। उवासका, रक्खसस्स वा पिसाचस्स केलको होहि, णत्थि उण दे अमुद्दालंछिदस्स णिक्कमणोवाओ (२)।

सिद्धा। भदन्त, भण, कधं मे कज्जसिद्धि होदुत्ति (३)।

चप। उपासका, गच्छ; होदु दे कज्जसिद्धी। अहंपि भागुराअणादो पाडलिउत्तं गन्तुं मुद्दं जच्छेमि (४)।

॥ इति निष्क्रान्तौ, प्रवेशकः ॥

---

यते; तत् यदि भागुरायणस्य मुद्रालाञ्छितोऽसि, तदा गच्छ विश्वस्तः; अन्यथा निवृत्य निरुत्कण्ठं तिष्ठ, मा त्वं गुल्मस्थानाधिपैः संयमितकरचरणो राजपुरे प्रवेक्ष्यसे।

(१) किं न जानाति भदन्तः, यथा अमात्यराक्षसस्य केलिकरो मन्त्रितः सिद्धार्थकोऽहमिति, तदमुद्रालाञ्छितमपि मां निष्क्रामन्तं कस्य शक्तिर्निवारयितुं?

(२) उपासक, राक्षसस्य पिशाचस्य वा केलिकरो भव, नास्ति पुनस्ते अमुद्रलाञ्छितस्य निष्क्रमणोपायः।

(३) भदन्त, भण, कथं मे कार्य्यसिद्धिर्भवतु।

(४) उपासक, गच्छ, भवतु ते कार्य्यसिद्धिः। अहमपि भागुरायणात् मुद्रां यच्छामि।

॥ ततः प्रविशति पुरुषेणानुगम्यमानो भागुरायणः ॥

भागु ॥ आत्मगतं ॥ अहो विचित्रता आर्य्यचाणक्यनीतेः !

कुतः; मुहुर्लक्ष्योद्भेदा, मुहुरधिगमाभावगहना,
मुहुः संपूर्णाङ्गी, मुहुरतिकृशा कार्य्यवशतः,
मुहुर्भ्रश्यद्बीजा, मुहुरपि बहुप्रापितफले
त्यहो चित्राकारा नियतिरिव नीतिर्नयविदः ।

॥ प्रकाशं ॥ भद्र, भासुरक, न मां दूरीभवन्तमिच्छति कुमारः, अतोऽस्मिन्नेवास्थानमण्डपे विन्यस्यतामासनं ।

पुरुषः । एदं आसणं, उपविसदु अज्जो ।

भागु ॥ उपविश्य ॥ भद्र भासुरक, यः कश्चिन्मुद्रार्थी मां द्रष्टुमिच्छति, स त्वया प्रवेशयितव्यः ।

पुरु । जं अज्जो आणवेदित्ति ॥ निष्क्रान्तः ॥

भागु ॥ स्वगतं ॥ कष्टमेवमपि नामायमस्मासु स्नेहवान् कुमारो मलयकेतुरिति सन्धातव्यः इत्यहो दुष्करं । अथवा ।

कुले, लज्जायां च, स्वयशसि च, माने च, विमुखः,
शरीरं विक्रीय क्षणिकधनलाभाद्धनवति ;
तदाज्ञां कुर्व्वाणो, हितमहितमित्येतदधुना
विचारातिक्रान्तः, किमिति परतन्त्रो विमृशति ।

॥ ततः प्रविशति प्रतीहार्य्यनुगतो मलयकेतुः ॥

मल ॥ स्वगतं ॥ अहो, राक्षसं प्रति मे विकल्पबाहुल्यादाकुला बुद्धिर्न निश्चयमधिगच्छति । कुतः ।

भक्त्या नन्दकुलानुरागदृढया नन्दान्वयालम्बिना,
किं चाणक्यनिराकृतेन कृतिना मौर्य्येण सन्धास्यते;
स्थैर्य्यं भक्तिगुणस्य वा विगणयन् किं सत्यसन्धो भवे
दित्यारूढकुलालचक्रमिव मे चेतश्चिरं भ्राम्यति।

॥ प्रकाशं ॥ विजये, क्व भागुरायणः?

प्रतीहारी। कुमार, एसो क्खु कडआदो णिक्कमिदुकामाणं मुद्दासम्पदाणाधिआरे चिट्ठदि (१)।

मल। विजये, मुहूर्त्तं निभृतपदसञ्चारी भव, यावदस्य परा ङ्मुखस्यैव पाणिभ्यां नयने पिदधामि।

प्रती। जं कुमारो आणवेदि।

॥ प्रविश्य ॥ भासुरकः। अज्ज, एसो क्खु क्खवणओ मुद्दा णिमित्तं अज्जं पेक्खिदुमिच्छदि (२)।

भागु। प्रवेशय।

भासु। जं अज्जो आणवेदित्ति ॥ निष्क्रान्तः ॥

॥ प्रविश्य ॥ क्षपणकः। सावआणं धम्मविड्ढी होदु (३)।

भागु॥ नाट्येनावलोक्य स्वगतं॥ अये, राक्षसस्य मित्रं,

---

(१) एष खलु कटकान्निष्क्रमितुकामानां मुद्रासम्प्रदाना धिकारे तिष्ठति।

(२) आर्य्य एष खलु क्षपणको मुद्रानिमित्तं आर्य्यं द्रष्ट मिच्छति।

(३) धर्म्मलाभ उपासकानां भवतु।

जीवसिद्धिः॥ प्रकाशं॥ भदन्त न, खलु राक्षसस्य प्रयोजनमेव किञ्चिदुद्दिश्य गम्यते।

क्षप॥ कर्णौ पिधाय॥ सन्तं पावं, सन्तं पावं, सावका, तहिं ज्जेव्व गमिस्सं, जहिं रक्खसस्स पिसाचस्स वा नामंपि ण सुणीअदि (१)।

भागु। भदन्त, बलीयांस्ते सुहृदि प्रणयकोपः; तत् किमप राद्धं राक्षसेन भदन्तस्य?

क्षप। सावका, ण मम किंपि रक्खसेण अवलद्धं; सअंजेव्व मन्दभाओ अप्पाणं अवलद्धामि (२)।

भागु। भदन्त, वर्द्धयसि मे कुतूहलं।

मल॥ स्वगतं॥ मम च।

भागु। श्रोतुमिच्छामि।

मल॥ स्वगतं॥ अहमपि।

क्षप। सावका किं एदिणा सुणिदेण (३)।

भागु। भदन्त, यदि रहस्यं, तदा तिष्ठतु।

---

(१) शान्तं पापं; हे उपासक, तत्रैव गमिष्यामि, यत्र राक्षसस्य पिशाचस्य वा नामापि न श्रूयते।

(२) उपासक, न मे राक्षसेनापराद्धं, स्वयमेव मन्दभाग्य आत्मनोऽपराध्यामि

(३) उपासक, किमेतेन श्रुतेन।

क्षप। उपासका णहि रहस्सं (१)

भागु। तर्हि कथ्यतां।

क्षप। सावका, णत्थि एदं; तधावि ण कधइस्सं अदिणिसंसं(२)।

भागु। भदन्त अहमपि मुद्रां न दास्यामि।

क्षप ॥ स्वगतं॥ युक्तमिदानीमर्थिने कथयितुं॥ प्रकाशं॥ का गदी; एसे णिवेदेमि, सुणादु सावको। अत्थि दाव हगे अधण्णो पढमं पाडलिउत्ते निवसमाणो लक्खसस्स मित्तत्तण मुवगदे; तहिंस्स अन्तले लक्खसेण गूढं विसकण्णापओअं समुप्पादिअ, घादिदे देवे पव्वदीसले (३)।

मल ॥ सवाष्पमात्मगतं॥ कथं, राक्षसेन घातितस्तातो न चाणक्येण?

भागु। भदन्त, ततस्ततः।

क्षप। तदो हग्गे लक्खसस्स मित्त कदुअ, चाणक्कहदएण सणिकालं णअरादो णिवासिदो; दाणींपि लक्खसेण णिअ

---

(१) उपासक नहि रहस्यं।

(२) नास्तीदं, तथापि न कथयिष्यामि अतिनृशंसं।

(३) का गतिः एष निवेदयामि शृणोतूपासकः अस्ति तावदहमधन्यः प्रथमं पाटलिपुत्रे निवसन् राक्षसस्य मित्रत्व मुपगतः; तस्मिन्नेवान्तरे राक्षसेन गूढविषकन्याप्रयोगमुत्पाद्य, घातितो देवः पर्व्वतेश्वरः

णिअराअकज्जकुसलेण किंपि तादिसं आलम्भीअदि, जेण हग्गे जीअलोआदो णिव्वासिआमि (१)।

भागु। भदन्त, प्रतिश्रुतराज्यार्द्धसंप्रदानमनिच्छता चाणक्यहतकेनेदमकार्य्यमनुष्ठितं, न राक्षसेनेति श्रुतमस्माभिः।

क्षप ॥ कर्णौ पिधाय ॥ सन्तं पावं; उवासका, चाणको विसकण्णाए णामंपि ण जाणादि; तेणज्जेव्व दुट्टबुद्धिणा रक्खसेण एसा अकज्जसिद्धी कदा (२)।

भागु। भदन्त, कष्टमिदं; इयं मुद्रा; एहि कुमारं संश्रावयाव।

मल। श्रुतं, सखे, श्रवणविदारणं वचः,
सुहृन्मुखाद्रिपुमधिकृत्य भाषितं,
पितुर्व्वधव्यसनमिदं हि येन, मे
चिरादपि द्विगुणमिवाद्य वर्द्धते।

क्षप ॥ स्वगतं ॥ अये, श्रुतं मलयकेतुहतकेन, कृतार्थोऽस्मीति

॥ निष्क्रान्तः क्षपणकः ॥

मल ॥ प्रत्यक्षवदाकाशे लक्ष्यं बध्वा ॥ राक्षस, युक्तमिदं।

---

(१) ततोऽहं राक्षसस्य मित्रं कृत्वा, चाणक्यहतकेन सनिकारं नगरान्निर्व्वासितः; इदानीमपि राक्षसेन निजनिजराजकार्य्यकुशलेन किमपि तादृशमालभ्यते, येनाहं जीवलोकात् निर्व्वास्ये।

(२) शान्तं पापं! चाणक्योविषकन्यायानामापि न जानाति; तेनैव दुष्टबुद्धिना राक्षसेन एषा अकार्य्यसिद्धिः कृता।

मित्रं ममायमिति निर्वृतचित्तवृत्तिं,
विश्रम्भतस्त्वयि निवेशितसर्व्वकार्य्यं ;
तातं निपात्य, सहबन्धुजनाक्षितोये
रक्षार्थतोऽपि ननु राक्षस, राक्षसोऽसि ।

भागु ॥ स्वगतं ॥ रक्षणीया राक्षसस्य प्राणा, इत्यार्य्यादेशः; भवत्वेवं तावत् ॥ प्रकाशं ॥ कुमार, अलमावेगेन ; आसनस्थं कुमारं किञ्चिद्विज्ञापयितुमिच्छामि ।

मल ॥ उपविश्य ॥ सखे, किमसि वक्तुकामः ।

भागु । कुमार, इह खलु अर्थशास्त्रव्यवहारिणामर्थवशादरिमित्रोदासीनव्यवस्था । न लौकिकानामिव स्वेच्छावशात्; यतस्तस्मिन् काले सर्व्वार्थसिद्धिं राजानमिच्छतो राक्षसस्य, चन्द्रगुप्तादपि बलीयस्तया सुगृहीतनामा देवः पर्व्वतेश्वर एव अर्थपरिपन्थी, महानरातिरासीत्; तस्मिंश्च काले, राक्षसेनेदमनुष्ठितमिति नातिदोषमिवात्र पश्यामि । पश्यतु कुमारः;

मित्राणि शत्रुत्वमिवानयन्ती, मित्रत्वमप्यर्थवशाच्च शत्रून्,
नीतिर्नयत्यस्मृतपूर्व्ववृत्तं जन्मान्तरं जीवत एव पुंसः ।

तदत्र वस्तुन्यनुपालभ्यो राक्षसः; आनन्दराज्यलाभादनुग्राह्यश्च; परतस्तस्य परिग्रहे, परित्यागे वा, कुमारः प्रमाणं भविष्यति ।

मल । एवं भवतु, सखे, सम्यक् दृष्टवानसि । अन्यथास्य बधे प्रकृतिक्षोभः स्यात्, एवञ्च सन्दिग्धो विजयः स्यादस्माकं ।

॥ प्रविश्य ॥ पुरुषः । जअदु जअदु कुमारो ; अअं अज्जस्स गुम्हट्ठाणाधिकिदो दीहचक्खू अज्जं विण्णवेदि ; एसो क्खु अह्मेहिं कडआदो णिक्कमन्तो अगहीदमुद्दो सलेहो पुरुसो गहीदो ; ता पच्चक्खीकरेदु णं अज्जोत्ति (१)।

भागु। भद्र प्रवेशय।

पुरु। जं अज्जो आणवेदित्ति ॥ निष्क्रान्तः ॥

॥ ततः प्रविशति पुरुषेणानुगम्यमानः संयतः सिद्धार्थकः ॥

सिद्धा ॥ स्वगतं ॥

तिप्पन्तीए गुणेसुं, दोसेसुं परंमुहं करन्तीए,

अह्मारिसजणणीए पणमामो सामिभत्तीए (२)।

पुरु ॥ उपसृत्य ॥ अज्ज, अअं सो पुरिसो (३)।

भागु ॥ नाट्येनावलोक्य ॥ भद्र, किमयमागन्तुक आहो स्विदिहैव कस्यचित् परिग्रहः?

---

(१) जयतु जयतु कुमारः; अयं आर्य्यस्य गुल्मस्थानाधिकारी दीर्घचक्षुर्विज्ञापयति ; एष खलु अस्माभिः कटकात् निष्क्रामन् अगृहीतमुद्रः सलेखः पुरुषो गृहीतः ; तत् प्रत्यक्षी करोत्वेनमार्य्य इति।

(२) तर्पयन्त्या गुणेषु, दोषेषु पराङ्मुखं कुर्व्वन्त्याः,

अस्माकं जनन्या प्रणमामः स्वामिभक्तेः।

(३) सोऽयं पुरुषः।

सिद्धा। अज्ज अहं क्खु अमच्चरक्खसस्स पासपरिवत्ती ॥१॥

भागु। भद्र, तत्किमर्थमगृहीतमुद्रः कटकान्निष्क्रामसि।

सिद्धा। अज्ज, कज्जगोरवेणह्मि तुवरादरो (२)।

भागु। कीदृशं तत्कार्य्यगौरवं, यद्राजशासनमुल्लङ्घयसि।

मल। सखे भागुरायण, लेखमुपानय।

सिद्धा॥ भागुरायणाय लेखमर्पयति॥

भागु॥ सिद्धार्थकहस्ताल्लेखं गृहीत्वा मुद्रां दृष्ट्वा॥ कुमार, अयं लेखः, राक्षसनामाङ्कितेयं मुद्रा।

मल॥ मुद्रां परिपालयन्नुद्घाट्य, दर्शय।

भागु॥ तथा कृत्वा दर्शयति॥

मल॥ गृहीत्वा वाचयति॥ स्वस्ति,यथास्थाने कुतोऽपि,कोऽपि, कमपि, पुरुषविशेषमवगमयति, अस्मद्विपक्षं निराकृत्य,दर्शिता सत्यवादिता सत्यवता। साम्प्रतमेषामपि प्रथममुपन्यस्तसन्धीनामस्मत्सुहृदां,पूर्व्वप्रतिज्ञातसन्धिपरिपणवस्तुप्रतिपादनेन सत्यसन्धः, प्रीतिमुत्पादयितुमर्हति। एते ह्येवमुपगृहीताः सन्तः,स्वाश्रयविनाशेनैवोपकारिणमाराधयिष्यन्ति। अविस्मृतमप्येतत् सत्यवतः स्मारयामि, एतेषां मध्ये केचिदरेः कोषदन्ति

---

(१) आर्य्य, अहं खलु अमात्यराक्षसस्य पार्श्वपरिवर्त्ती।

(२) आर्य्य, कार्य्यगौरवेणास्मि त्वरितः।

भ्यामर्थिनः केचिद्विषयेणेति ; अस्मान् प्रति अलङ्कारत्रयञ्च; यत्तत्र्यंवतानुप्रेषितं तदुपगतं, अस्माभिरपि लेखस्याशून्यार्थं, किञ्चिदनुप्रेषितं, तदुपगमनीयं वाचिकञ्चाप्ततमात् सिद्धार्थकात् श्रोतव्यमिति।

मल। सखे भागुरायण, कीदृशो लेखार्थः।

भागु। भद्र सिद्धार्थक, कस्यायं लेखः।

सिद्धा। अज्ज ण आणामि (१)।

भागु। हे धूर्त्त,लेखो नीयते; न च ज्ञायते कस्येति सर्व्वं, तावत्तिष्ठतु; वाचिकं त्वत्तः केन श्रोतव्यं?

सिद्धा। तुह्मेहिं।

भागु। किमस्माभिः

सिद्धा। तुह्मेहिं गहीदो, ण आणामि किं कधेति (२)।

भागु॥ सक्रोधं॥ एष ज्ञास्यसि; भद्र भासुरक, बहिर्नीत्वा, ताड्यतां तावत्, यावत् सर्व्वमनेन कथितं भवेत्।

पुरु। जं अज्जो आणवेदित्ति॥सिद्धार्थकेन सह निष्क्रान्तः॥ ॥पुनः प्रविश्य॥ अज्ज, इयं तस्स ताडीअमाणस्स लक्खसमुद्दालंछिदा आहरणपेडोआ णिवडिदा (३)।

---

(१) आर्य्य न जानामि।

(२) युष्माभिर्गृहीतो न जानामि का कथेति।

(३) इयं तस्य ताड्यमानस्य राक्षसमुद्रालाञ्छिता भरणपेटिका निपतिता।

भागु॥ विलोक्य॥ कुमार, इयमपि राक्षसमुद्राङ्कितैव।

मल। अनया सलेखोऽस्याशून्यार्थो भविष्यति। इमामपि मुद्रां परिपालयन्नुद्घाट्य, दर्शय।

भागु॥ तथा कृत्वा दर्शयति॥

मल॥ विलोक्य॥ अये, तदिदमाभरणं यन्मया स्वशरीरादवतार्य्य, राक्षसाय प्रेषितं; व्यक्तं चन्द्रगुप्तस्यायं लेखः।

भागु। कुमार, एष निर्णीयते संशयः। भद्र पुनरपि ताड्यतां।

पुरु। जं अज्जो आणवेदित्ति॥ निष्क्रम्य पुनः प्रविश्य च॥ अज्ज एसो क्खु ताडोअमाणोविण्णवेदि कुमारस्स स्सयंजेव्व णिवेदेमित्ति (१)

मल। प्रवेशय।

पुरु। जं कुमारो आणवेदित्ति॥ निष्क्रम्य सिद्धार्थकेन सह प्रविशति॥

सिद्धा॥ पादयोर्निपत्य॥ अभएण, मे कुमारो पसादं करेदु (२)।

मल। भद्र, भद्र, अभयमेव परायत्तजनस्य, तन्निवेद्यतां यथावस्थितं।

---

(१) आर्य्य एष खलु ताड्यमानो विज्ञापयति कुमारस्य स्वयमेव निवेदयामीति।

(२) अभयेन मे कुमारः प्रसादं करोतु।

सिद्धा। णिसामेदु कुमारो; अहं क्खु अमच्चरक्खसेण इमं लेहं देइअ, चन्द उत्तसकासं पेसिदोह्मि (१)।

मल। भंद्र, वाचिकमिदानीं श्रोतुमिच्छामि।

सिद्धा। कुमार, संदिट्ठो ह्मि अमच्चरक्खसेण, जधा, एते मम पिअवअस्सा पञ्च राआणो तुए सह पढमसमप्पण्णसन्धाणा; जहा, कुलूदाहिवो चित्तवम्मा, मलजअणवदाधिवो सोहणादो, कस्मीरदेसणाहो पुक्खरक्खो, सिन्धुराओ सिन्धुसेणो, पारसी आधिवदो मेहक्खोत्ति, एत्थ जेव्व पढमभणिदा तिण्णि। राआणो दे मलअकेदुणो विसअं अहिलसन्ति; इदरेवि दुवे कोसहत्थि बलंत्ति। ता जधा, चाणक्कं णिराकरीअ महाराएण, मम प्पीदी उप्पादिआ, तधा एदाणंपि पढमभणिदो अत्थो प्पसाददइव्वो; एत्तिको राअसन्देसोत्ति (२)।

---

(१) निशामयतु कुमारः; अहं खलु अमात्यराक्षसेन इमं लेखं दत्वा, चन्द्रगुप्तसकाशं प्रेषितोऽस्मि।

(२) कुमार, संदिष्टोऽस्मि अमात्यराक्षसेन, यथा, एते मम प्रियवयस्या पञ्च राजानस्त्वया सह प्रथमसमुत्पन्नसन्धानाः; यथा, कुलूताधिपश्चित्रवर्म्मा, मलयजनपदाधि सिंहनादः, काश्मीरदेशाधिपः पुष्कराक्षः, सिन्धुराजः सिन्धुसेनः, पारसीकाधिपतिर्मेघाक्षइति। अत्रैव ये प्रथमभणितास्त्रयो राजानस्ते मलयकेतोर्विषयमभिलषन्ति; इतरावपि द्वौ हस्तिबलमिति। तद्यथा चाणक्यं निराकृत्य महाराजेन मम

मल॥ स्वगतं॥ कथं चित्रवर्म्मादयोऽपि मत्समभिद्रु ह्यन्ति; अतएवैतेषां राक्षसे निरतिशया प्रीतिः॥ प्रकाशं॥ विजये, अमात्यराक्षसं द्रष्टुमिच्छामि।

प्रती। जं कुमारो आणवेदित्ति॥ निष्क्रान्ता॥

॥ ततः प्रविशत्यासनस्थः स्वभवनगतः पुरुषेणानुगम्यमानः सचिन्तो राक्षसः॥

राक्ष॥ स्वगतं॥ असम्पूर्णमस्मद्दलं चन्द्रगुप्तबलैरिति; यत्, सत्यं न मे मनसः शुद्धिरस्ति। कुतः।

साध्ये निश्चितमन्वयेन कथितं विभ्रत्स्वपक्षस्थितिं,

व्यावृत्तश्च विपक्षतो भवति, यत्तत् साधनं सिद्धये।

यत् साध्यं स्वयमेव तुल्यमुभयोः पक्षे विरुद्धश्च य

त्तस्याङ्गीकरणेन वादिन इव स्यात् स्वामिनो निग्रहः।

अथवा। तैस्तैर्विज्ञातापरागहेतुभिः प्राक्परिगृहीतोप जापैरापूर्णमिति न विकल्पयितुमर्हामि॥ प्रकाशं॥ प्रियम्वदक, उच्यन्तामस्मद्वचनात् कुमारानुयायिनो राजानः; सम्प्रति दिने दिने प्रत्यासीदति कुसुमपुरं; अतः परिकल्पितविभागै र्भवद्भिः प्रयाणे प्रस्थातव्यं। कथमिति।

प्रस्थातव्यं पुरस्तात्खशमगधगणैर्मामनु व्यूढसैन्यै

र्गान्धारैर्मध्ययाने सजवनपतिभिः सन्निधेरप्रयत्नः;

---

प्रीतिरुत्पादिता, तथा एतेषामपि प्रथमभणितोऽर्थः संपाद यितव्य इति एतावान् राजसन्देश इति।

पश्चाद्गच्छन्तु कीराः, शकनरपतयः, संवृताश्चेदिहूणैः,
कौलूताद्याश्च शिष्टः पथि परिवृणुयाद्राजलोकः कुमारं।

प्रियं। जं अमच्चो आणवेदित्ति ॥ निष्क्रान्तः॥

॥ततः प्रविश्य प्रतीहारी॥ जअदु जअदु अमच्चो ; अमच्चं इच्छदि कुमारो पेक्खिदुं (१)

राक्ष। भद्रे, मुहूर्त्तं तिष्ठ। कः कोऽत्र भोः?

॥ प्रविश्य॥ पुरुषः। आणवेदु अमच्चो।

राक्ष। भद्र, शकटदासं प्रति ब्रूहि, यथा परिधापिता वयमाभरणं कुमारेण; तन्न युक्तमिदानीमस्माभिरनलङ्कृतैः कुमारदर्शनमनुभवितुं; अतो यत्तदलङ्करणत्रयं क्रीतं तन्मध्यादेकं दीयतामिति।

पुरु। जं अमच्चो आणवेदित्ति ॥ निष्क्रम्य पुनः प्रविश्य च॥ अमच्च, इमं तं अलङ्करणं (२)।

राक्ष ॥ नाट्येनावलोक्यात्मानमलङ्कृत्योत्थाय च ॥ भद्र, राजकुलगामिनं मार्गमादेशय।

प्रती। एदु अमच्चो।

राक्ष ॥ स्वगतं॥ अधिकारपदं नाम निर्दोषस्यापि पुरुषस्य महदाशङ्कास्थानं। कुतः;

---

(१) जयतु जयत्वमात्यः अमात्यमिच्छति कुमारः प्रेक्षितुं।

(२) अमात्य इदं तदलङ्करणं।

भयं तावत् सेव्यादभिनिविशति सेवकजनं,
ततः प्रत्यासन्नाद्भवति हृदयेष्वेव निहितं;
ततोऽध्यारूढानां पदमसुजनोद्वेगजननं,
मतिः सोच्छ्रायाणां पतनमनुकूलं कलयति।

॥ परिक्रम्य ॥ प्रती। अमच, अअं कुमारो चिट्ठदि, ता उपसप्पदु णं अमचो (१)।

राक्ष ॥ नाट्येनावलोक्य ॥ अये, अयं कुमारस्तिष्ठति, य एषः,

पादाग्रे दृशमवधाय निश्चलन्तीं,
शून्यत्वादपरिगृहीततद्विशेषां;
वक्त्रेन्दुं वहति करेण दुर्व्वहाणा
कार्य्याणां कृतमिव गौरवेण नम्रं।

॥ उपसृत्य ॥ विजयतां, विजयतां, कुमारः।

मल। आर्य्य, अभिवादये; इदमासनमास्यतां।

राक्ष ॥ उपविशति ॥

मल। अमात्य, चिरमदर्शनेनार्य्यस्य वयमुद्विग्नाः।

राक्ष। कुमार, प्रयाणे प्रतिविधानमनुतिष्ठता मया, कुमारादयमुपालम्भोऽधिगतः।

मल। अमात्य, प्रयाणे कथं प्रतिविहितमिति श्रोतुमिच्छामि।

---

(१) अमात्य, अयं कुमारस्तिष्ठति, तदुपसर्पतेनममात्यः।

राक्ष। कुमार, एवमादिष्टाः कुमारस्यानुयायिनो राजानः; ॥ प्रस्थातव्यमित्यादिश्लोकं पुनः पठति ॥

मल ॥ स्वगतं ॥ विज्ञायते कथं, यएव मद्विनाशेन चन्द्रगुप्तमाराधयितुमुद्यतास्तएव मां परिवृण्वन्ति ॥ प्रकाशं ॥ आर्य्य, अस्ति कश्चिद्यः कुसुमपुरं प्रति गच्छति, ततआगच्छति वा।

राक्ष। कुमार, अवसितमिदानीं गतागतप्रयोजनं, ननु पञ्चषैरहोभिर्वयमेव तत्र गन्तारः।

मल ॥ स्वगतं ॥ विज्ञायते ॥ प्रकाशं ॥ यद्येवं, तत्किमयमार्य्येण सलेखः पुरुषः कुसुमपुरं प्रस्थापितः?

राक्ष ॥ विलोक्य ॥ अये सिद्धार्थकः; भद्र, किमिदं?

सिद्धा ॥ लज्जां नाटयन् ॥ पसीददु पसीददु अमच्चो; अमच्च, ताडीअन्तेण मए ण पारिदं अमच्चस्स रहस्सं धारिदुं (१)।

राक्ष। भद्र, कीदृशं तत् रहस्यमिति, न खल्ववगच्छामि।

सिद्धा। ननु विण्णवेमि, ताडीअंतेण मए इत्यर्द्धोक्ते ॥ सभयमधोमुखस्तिष्ठति ॥ (२)।

---

(१) प्रसीदतु प्रसीदत्वमात्यः; अमात्य, ताड्यमानेन मया न पारितममात्यस्य रहस्यं धारयितुं।

(२) ननु विज्ञापयामि, ताड्यमानेन मया।

मल। भागुरायण, स्वामिनः, पुरस्ताद्भीतो, लज्जितश्च, नैष कथयिष्यति; अतः स्वयमेव आर्य्याय कथय।

भागु। यदाज्ञापयति कुमारः। अमात्य, एष कथयति, यथाहममात्यराक्षसेन लेखं दत्वा, वाचिकञ्च सन्दिश्य, चन्द्रगुप्त सकाशं प्रस्थापित इति।

राक्ष। भद्र सिद्धार्थक, अपि सत्यं?

सिद्धा ॥ लज्जां नाटयति॥ इमं ताडीअंतेन मए णिवेदिदं (१)।

राक्ष। कुमार, अनृतमेतत्। ताड्यमानः किं न ब्रूयात्।

मल। भागुरायण, दर्शय लेखं, वाचिकन्त्वयमसौ स्वभृत्यः कथयिष्यति।

भागु ॥ त्रुत्वा लेखमवलोकयन्॥ कोऽपि कुतोऽपि कमपि पुरुषमवगमयतीति वाचयति॥

राक्ष। कुमार, कुमार, शत्रोः प्रयोग एषः।

मल। लेखस्याशून्यार्थमार्य्येणेदमाभरणमनुप्रेषितं; इति तत् कथं शत्रोः प्रयोगएष स्यात्॥ इत्याभरणं दर्शयति॥

राक्ष ॥ आभरणं निर्व्वर्ण्य ॥ कुमार, नैतन्मयानुप्रेषितं; एतद्धि कुमारेण मह्यं दत्तं, मया च परितोषस्थाने सिद्धार्थकाय दत्तं।

---

(१) इदं ताड्यमानेन मया निवेदितं।

भागु। भो अमात्य, ईदृशस्याभरणविशेषस्य, विशेषतः कुमारेण स्वगात्रादवतार्य्य,दत्तस्यायं परित्यागभूमिः?

मल। वाचिकमप्याप्ततमात् सिद्धार्थकात् श्रोतव्यमिति लिखितमार्य्येण।

राक्ष। कुतो वाचिकं? कस्य वा लेखः? अयमेवास्मदीयो न भवति।

मल। इयं तर्हि कस्य मुद्रा?

राक्ष। कुमार,कपटमुद्रामप्युत्पादयितुं शक्नुवन्ति धूर्त्ताः।

भागु। कुमार,सम्यगमात्यो विज्ञापयति। भद्र सिद्धार्थक, केनायं लिखितो लेखः।

सिद्धा ॥ राक्षसमुखमवलोक्य तूष्णीमधोमुखस्तिष्ठति॥

भागु। अलं पुनरात्मानं ताडयित्वा, कथय।

सिद्धा। अज्ज सअडदासेण (१)।

राक्ष। कुमार, यदि शकटदासेन लिखितस्तर्हि मयैव लिखितः।

मल। विजये, शकटदासं द्रष्टुमिच्छामि।

प्रती। जं कुमारो आणवेदित्ति।

भागु ॥ स्वगतं ॥ न खल्वनिश्चितार्थमार्य्यचाणक्यप्रणिधयोऽभिधास्यन्ति, आगत्य शकटदासो वा, सोऽयं लेखइति प्रत्य

---

(१) आर्य्यशकटदासेन।

भिज्ञाय पूर्व्ववृत्तं प्रकाशयेत्; एवं सति सन्दिहानो मलयकेतुरस्मिन् प्रयोगे श्रयादरो भवेत् ॥ प्रकाशं ॥ कुमार, न कदाचिदपि शकटदासो ऽमात्यराक्षसस्यायतो मया लिखित इति प्रतिपत्स्यते; अतो ऽन्यलिखितमस्यानीयतां, यतो वर्णसंवाद एवैतत् सर्व्वं विभावयिष्यति।

मल। विजये, एवं क्रियतां।

भागु। कुमार, मुद्रामप्यानयतु इयं।

मल। उभयमपि क्रियतां।

प्रती। जं कुमारो आणवेदित्ति।

॥ निष्क्रम्य पुनः प्रविश्य ॥ कुमार, इमं क्खु तं सअडदासेण सहत्थलिहिदं पत्तअं,मुद्दा अ (१)।

मल॥ उभयमपि नाट्येनावलोक्य॥ आर्य्य, संवदन्त्यक्षराणि।

राक्ष ॥ स्वगतं॥ संवदन्त्यक्षराणि; शकटदासस्तु मम मित्त्रमिति विसंवदन्त्यक्षराणि; तत् किं शकटदासेन लिखितः।

स्मृतं स्यात् पुत्त्रदाराणां,विस्मृताः स्वामिभक्तयः,
चलेष्वर्थेषु लुब्धेन, न यशःस्वनपायिषु?

अथवा कः सन्देहः?

---

(१) कुमार, इदं खलु तत् शकटदासेन स्वहस्तलिखितं पत्त्रं, मुद्रा च।

मुद्रा तस्य कराङ्गुलिप्रणयिनी, सिद्धार्थकस्तत्सुह
त्तस्यैवापरलेख्यसूचितमिदं पत्रं प्रयोगाश्रयं;
सुव्यक्तं शकटेन भेदपटुना सन्धाय साईं परै
र्भर्त्तुः स्नेहपराङ्मुखेन, क्षपणं प्राणार्थिना चेष्टितं।

मल। आर्य्य, अलङ्कारत्रयं श्रीमता यदनुप्रेषितं, तदुपगत मित्यार्य्येण यल्लिखितं, तन्मध्यादेकं किमिदं॥ निर्व्वर्ण्यात्मगतं॥ कथं तातेन धृतपूर्व्वमिदमाभरणं॥ प्रकाशं॥ आर्य्य, कुतोऽयम लङ्कारः।

राच। वणिग्भ्यः क्रयादधिगतः।

मल। विजये, अपि प्रत्यभिजानाति भवती भूषणमिदं।

प्रती॥ निर्व्वर्ण्य सवाष्पं॥ कुमार, कहं ण पच्चभिजाणिस्सं; इमं क्खु सुगिहीदणामधेएण देवेण पव्वदीसरेण धारिदपूव्वं (१)।

मल ॥ सवाष्पं॥ हा तात!

एतानि तानि तव भूषणवल्लभस्य
गात्रोचितानि कुलभूषण भूषणानि,
यैः शोभितोऽसि, मुखचन्द्रकृतावभासो,
नक्षत्रवानिव शरत्समयप्रदोषः।

राच ॥ स्वगतं॥ कथं पर्व्वतेश्वरधृतपूर्व्वाणीत्याह?

---

(१) कथं न प्रत्यभिज्ञास्यामि, इदं खलु सुगृहीतनाम धेयेन देवेन पर्व्वतेश्वरेण धारितपूर्व्वं।

॥ प्रकाशं ॥ व्यक्तमेतान्यपि तेन चाणक्यप्रयुक्तेन वणिग्जनेना स्मासु विक्रीतानि।

मल। आर्य्य, तातेन धृतपूर्व्वाणामाभरणानां विशेषत श्चन्द्रगुप्तहस्तगतानामाभरणानां वणिग्भ्यः क्रयादधिगत इति, न युज्यते एतत्। अथवा युज्यतेएव।

चन्द्रगुप्तस्य विक्रेतुरधिकं लाभमिच्छतः;
कल्पिता मूल्यमेतेषां क्रूरेण भवता वयं।

राक्ष ॥ आत्मगतं ॥ अहो, सुश्लिष्टोऽभूदेष प्रयोगः। कुतः;
लेखोऽयं न ममेति, नोत्तरमिदं, मुद्रा मदीया यतः?
सौहार्द्दं शकटेन खण्डितमिति श्रद्धेयमेतत्कथं?
मौर्य्ये भूषणविक्रयं नरपतौ को नाम संभावयेत्?
तस्मात्सम्प्रतिपत्तिरेव हि वरं न ग्राम्यमचोत्तरं।

मल। एतदार्य्यं पृच्छामि।

राक्ष। यआर्य्यस्तं पृच्छ; वयमिदानीमनार्य्याः संवृत्ताः।

मल।
मौर्य्योऽसौ स्वामिपुत्त्रः, परिचरणपरामित्त्रपुत्त्रस्तवाहं;
दाता सोऽर्थस्य तुभ्यं,स्वमतमनुगतस्त्वन्तु मह्यं ददासि;
दास्यं सत्कारपूर्व्वं ननु सचिवपदन्तत्र ते स्वाम्यमत्र,
स्वार्थे कस्मिन् समीहा पुनरधिकतरं त्वामनार्य्यं करोति।

राक्ष। कुमार,एवमभियुक्तव्यवहारिणा भवतैव मे निर्णयो दत्तः। कुतः। मौर्य्योऽसौ स्वामिपुत्त्र, इति युष्मदस्मदोर्व्यत्ययेन पठति।

मल ॥ लेखमलङ्करणस्थलिकां विनिर्द्दिश्य ॥ इदमिदानीं किं?

राक्ष ॥ सवाष्पं॥ विधेर्विलसितमिदं, न चाणक्यस्य । कुतः;

भृत्यत्वे परिभावधामनि सति स्नेहात्प्रभूणां सतां,
पुत्रेभ्यः कृतवेदिनां कृतधियो येषामभिन्ना वयं;
ते लोकस्य परीक्षकाः, क्षितिभृतः, पापेन येन क्षता
स्तस्येदं विपुलम्विधेर्व्विलसितं, पुंसां प्रयत्नच्छिदः।

मल ॥ सक्रोधं ॥ कथमद्यापि निह्नूयते विधेर्व्विलसितमिदं, न ममेति अनार्य्य।

कन्यान्तीव्रविषप्रयोगविषमां कृत्वा, कृतघ्न, त्वया
विश्रम्भप्रवणस्तदा मम पिता नीतः कथाशेषताम्;
सम्प्रत्याहितगौरवेण भवता मन्त्राधिकारे रिपोः,
प्रारब्धाः प्रणयाय मांसवदहो विक्रेतुमेते वयं।

राक्ष ॥ स्वगतं॥ अयमपरो गण्डस्योपरि विस्फोटः ॥ प्रकाशं॥ कर्णौ पिधाय ॥ शान्तं पापं; शान्तं पापं; नाहं विषकन्यामारोपितवानपापोऽहं पर्व्वतेश्वरे।

मल। केन तर्हि व्यापादितस्तातः।

राक्ष। दैवमत्र प्रष्टव्यं।

मल ॥ सक्रोधं॥ दैवमत्र द्रष्टव्यं; न क्षपणको जीवसिद्धिः?

राक्ष ॥ स्वगतं॥ कथं जीवसिद्धिरपि चाणक्यप्रणिधिः। हन्त हृदयमपि मे रिपुभिः स्वीकृतं।

मल ॥ सक्रोधं॥

भागुरायण, आज्ञाप्यतां शिखरसेनः, सेनापतिः ये एतेन राक्षसेन सह सौहार्दमुत्पाद्यास्मच्छरीराभिद्रोहेण चन्द्रगुप्त माराधयितुकामाः पञ्च राजानः। तद्यथा, कौलूतश्चित्रवर्म्मा, मलयनरपतिः सिंहनादः, काश्मीरः पुष्कराक्षः, सिन्धुराजः सुषेणः, पारसीकाधिराजो मेघाख्य इति। तत्र, तेषां मध्ये, ये त्रयः प्रधानतमाः प्रथमां मदीयां भूमिं कामयन्ते, ते गम्भीरश्वभ्रमुपनीय पांशुभिः पूर्य्यन्तां। इतरौ तु द्वौ हस्तिबलकामौ, हस्तिनैव घात्येतामिति।

पुरुषः। जं कुमारो आणवेदित्ति ॥ निष्क्रान्तः ॥

मल ॥ सक्रोधं ॥ राक्षस, राक्षस, नाहं विश्रम्भघाती राक्षसो, मलयकेतुः खल्वहं; तद्गच्छ, समाश्रीयतां सर्व्वात्मना चन्द्रगुप्त इति।

विष्णुगुप्तञ्च, मौर्य्यञ्च, सममप्यागतौ त्वया;
उन्मूलयितुमीशोऽहं त्रिवर्गमिव दुर्णयः।

भागु। कुमार, कृतं कालहरणेन, शीघ्रमेव कुसुमपुरोपरोधाय प्रतिष्ठन्तामस्मद्बलानि।

गौडीनां लोध्रधूलीपरिमलधवलान् धूसयन्तः कपोलान्,
क्लिश्नन्तः कृष्णिमानं भ्रमरकुलरुचः कुञ्चितस्यालकस्य,
पांशुव्यूहा बलानां, तुरगखुरपुटक्षोदलब्धात्मलाभाः,
शत्रूणामुत्तमाङ्गे गजमदसलिलच्छिन्नमूलाः पतन्तु।

॥ इति सपरिजनो निर्गतो मलयकेतुः ॥

राक्ष॥ सावेगं॥ हा धिक्, कष्टं! तेऽपि हतास्तपस्विनश्चित्र वर्म्मादयस्तत् कथं सुहृन्नाशाय राक्षसश्चेष्टते, न रिपुविनाशाय, तत्किमिदानीं करवाणि मन्दभाग्यः?

किं गच्छामि तपोवनं, न तपसा शाम्येत्सवैरं मनः;
किम्भर्तॄननुयामि जीवति रिपौ; स्त्रीणामियं योग्यता;
किम्वा खड्गसखः पताम्यरिबले, नेदं न युक्तं भवे
च्चेतश्चन्दनदासमोक्षरभसं रुन्ध्यात्कृतघ्नं न चेत्।

॥ इति निष्क्रान्ताः सर्व्वे ॥

॥ पञ्चमोऽङ्कः ॥

## ॥ अथ षष्ठोऽङ्कः ॥

---

॥ ततः प्रविशत्यलङ्कृतः सहर्षं सिद्धार्थकः ॥

सिद्धा।

जअदि जलदनीलो केसवो केसिघादी;
जअदि सुजणदिट्ठीचन्दमा चन्दउत्तो;
जअदि, जअणसज्जं जा अकाऊण सेण्णं,
पडिहदपडिवक्खा, अज्जचाणक्कनीदी।

जाव चिरस्स कालस्स पिअवअस्सं सुसिद्धत्थअं पेक्खामि॥ परिक्रम्यावलोक्य च ॥ अअं उण पिअवअस्सओ समिद्धत्थओ इदो ज्जेव आअच्छदि; ता जाव उवसप्पामि (१)।

---

(१) जयति जलदनीलः केशवः केशिघाती
जयति सुजनदृष्टिचन्द्रमाश्चन्द्रगुप्तः।
जयति जयनसज्जं या अकृला च सैन्यं
प्रतिहतप्रतिपक्षा आर्य्यचाणक्यनीतिः।

यावत् चिरस्य कालस्य प्रियवयस्यं समिद्धार्थकं पश्यामि। अयं पुनः प्रियवयस्यः समिद्धार्थकः इतएवागच्छति; तद्यावदुपसर्प्पामि।

॥ ततः प्रविशति समिद्धार्थकः ॥

समिद्धा।

सन्तावेन्ता आवणेसुं, मह्लसवेसुं रूआवेन्ता,

हिअअच्छिआवि विहवा, विरहे मित्ताणं दुम्मेन्ति।

सुदञ्च मए जधा मलअकेतुकडआदो पिअवअस्सओ सिद्धत्यओ आअदोत्ति; ता जाव णं अणेसामि ॥ परिक्रम्योपसृत्य च ॥ एसो सिद्धत्थओ। अवि सुहं पिअवअस्सस्स (१)।

सिद्धा॥ विलोक्य॥ कधं इदो ज्जेव्व पिअवअस्सओ; समिद्धत्यओ॥ उपगम्य॥ अवि सुहं पिअवअस्सस्स(२)।

॥ उभावन्योन्यमालिङ्गतः ॥

समिद्धा। अइ वअस्स, कुदो मे सुहं, जस्स तुमं चिरआलप्पवासपच्चागदोवि, अआणिअ वुत्तन्तं, अण्णदो गदोऽसित्ति(३)।

सिद्धा। पसीददु, पसीददु; पिअवअस्सो, अहं क्खु दिट्ठमेत्तेण ज्जेव्व अज्जचाणक्केण आणत्तो, जधा, सिद्धत्यअ, गच्छ एदं

(१) सन्तापयन्तः आपानेषु, गृहोत्सवेषु रोचयन्तः,

हृदयस्थिता अपि विभवा, विरहे मित्राणां दुर्मनायन्ते।

श्रुतञ्च मया यथा मलयकेतुकटकात्प्रियवयस्यः सिद्धार्थक आगतइति; तद्यावदेनमन्वेषयामि। एष सिद्धार्थकः। अपि सुखं प्रियवयस्यस्य।

(२) कथमितएव प्रियवयस्यः समिद्धार्थकः। अपि सुखं प्रियवयस्यस्य।

(३) अयि वयस्य, कुतो मे सुखं, यस्य त्वं चिरकालप्रवासप्रत्यागतोऽपि, अज्ञाप्य वृत्तान्तं, अन्यतो गतइति।

वुत्तन्तं पिअं पिअदंसणस्स देअस्स चन्दसीरिणो णिवेदेहित्ति। तदो तस्स तं णिवेदिअ,एवं अणुभूदपात्थिवपसादो, अहं पिअवअस्सं पेक्खिदुं तुह गेहं चलिदोह्मि (१)।

समिद्धा। वअस्स, जदि मए एदं सुणिदव्वं भोदि, ता मंपि सुणावेहि, किं तं पिअं पिअदंसणस्स चन्दसिरिणो णिवेदिदंत्ति (२)?

सिद्धा। पिअवअस्स, तवापि किं असुणिदव्वं अत्थि? ता णिशामेहि। अत्थि दाव, अज्ज चाणक्कणीदिमोहिदमदणा मलअकेदुहदएण,णिराकरिअ रक्खसं,हदा चित्तवम्मप्पमुहा प्पहाणा पञ्च पत्थिवा; तदो असमिक्खकारी एस,दुराआरोत्ति,कदुअ उज्झिअ मलअकेदुकडअभूमिं, णिअभूमिकुसलदाए भअविलोलसेसतणूकदपरिवारेसुं, सकं सकं विसअमभिप्पत्थिदेसुं पत्थिवेसुं, भद्दभडपुरुदत्तडिङ्गुरातवलउत्तराअसेणभागुराअणरोहिदक्खविजअवम्मप्पमुहेहिं, संजमिदो मलअकेदु। (३)।

---

(१) प्रसीदतु, प्रसीदतु, प्रियवयस्यः; अहं खलु हृष्टमाचेणैव आर्य्यचाणक्येनाज्ञप्तः,यथा,सिद्धार्थक, गच्छ इमं वृत्तान्तं प्रियं प्रियदर्शनस्य देवस्य श्रीचन्द्रस्य निवेदयेति। ततस्तस्य तन्निवेद्य, एवमनुभूतपार्थिवप्रसादः, प्रियवयस्यं प्रेक्षितुं तव गे ' चलितोऽस्मि।

(२) वयस्य, यदीदं मया श्रोतव्यं भवति, तन्मामपि श्रावय किं तत्प्रियं प्रियदर्शनस्य श्रीचन्द्रस्य निवेदितमिति ?

(३) प्रियवयस्य, तवापि किं अश्रोतव्यमस्ति; तन्निशामय,

समिद्धा। वअस्स, भद्दभडप्पमुहा किल देवस्स चन्दसिरिणो अवरत्ता, मलअकेतुं समाश्रिदात्ति लोए मन्तीअदि। ता किं णिमित्तं, एदं कुकविणाडअस्स विअ अण्णं मुहे अण्णं णिव्वहणेत्ति(१)?

सिद्धा। वअस्स सुण दाव; देवगदीए विअ असुणिदगदीए णमो अज्जचाणक्कणीदीए (२)।

समिद्धा। वअस्स, तदो तदो (३)।

---

असि तावदार्य्यचाणक्यनीतिमोहितमतिना मलयकेतुहतकेन निराकृत्य राक्षसं, हताश्चित्रवर्म्मप्रमुखाः प्रधानाः पञ्च पार्थिवाः; ततोऽसमीक्ष्यकारी एष, दुराचार इति कृत्वा, उज्झित्वा मलयकेतुकटकभूमिं, निजभूमिकुशलतया, भयविलोलसैन्यतनूकृतपरिवारेषु, स्वकं स्वकं विषयमभिप्रस्थितेषु पार्थिवेषु, भद्रभटपुरदत्तडिङ्गुरातबलगुप्तराजसेनभागुरायणरोहिताक्षविजयवर्म्मप्रमुखैः, संयमितो मलयकेतुः।

(१) वयस्य, भद्रभटप्रमुखाः किल देवस्य श्रीचन्द्रस्यापरक्ता मलयकेतुं समाश्रिता, इति लोको मन्त्रयति। तत्किं निमित्तं, कुकविनाटकस्येव अन्यत् मुखसन्धौ अन्यत् निर्व्वहणे?

(२) वयस्य शृणु तावत् देवगत्या इव अश्रुतगत्या नम आर्य्यचाणक्यनीत्याः।

( ) वयस्य, ततस्ततः।

सिद्धा। वअस्स, तदोपऊदि, सारसाधनसमुदाएण इदो णिक्कमिअ, अज्जचाणक्केण पडिवणं सराअलोअं असेसराअबलं (१)।

समिद्धा। वअस्स कहिं (२)?

सिद्धा। वअस्स, जहिं एदे,

अदिसअगरुएणं दाणदप्पेण दन्ती,
सजलजलदलीलामुव्वहन्तो णदन्ति;
कसपहरभएणं जाअकम्पा तुरन्ता,
गहिदजअणसज्जा, संपदन्ते तुरङ्गा (३)।

समिद्धा। वअस्स, सव्वं दाव चिट्ठदु; तधा सव्वलोअस्स पच्चक्खं उज्झिद्‌अहिआरो भविअ, कधं अज्जचाणक्को पुणोवि तं ज्जेव मन्तिपदं आरूढो (४)?

---

(१) वयस्य, ततःप्रभृति, सारसाधनसमुदायेन इतो निष्क्रम्य, आर्य्यचाणक्येण प्रतिपन्नं सराजलोकमशेषराजबलं।

(२) वयस्य कुत्र?

(३) यत्रैते

अतिशयगुरुणा दानदर्पेण दन्तिनः,
सजलजलदलीलामुद्वहन्तो नदन्ति;
कशाप्रहारभयेन जातकम्पास्त्वरयन्तः,
गृहीतजयनसज्जाः, साम्प्रतं ते तुरङ्गाः।

(४) वयस्य, तावत् सर्व्वं तिष्ठतु; तथा सर्व्वलोकस्य प्रत्यक्षमुज्झिताधिकारो भूत्वा, कथमार्य्यचाणक्यः पुनरपि तदेव मन्त्रिपदमारूढः?

सिद्धा। वअस्स, अदिमुद्धो दाणीं सि तुमं, जो अमच्चरक्ख सेण अणवगाहिदपुव्वं अज्जचाणक्कबुद्धिं अवगाहिदुमिच्छसि (१)।

समिद्धा। वअस्स, अध अमच्चरक्खसो दाणीं कहिं (२)?

सिद्धा। वअस्स, सो क्खु तस्सिं पलअकोलाहले वट्टमाणे, मलअकेदुकडआदो णिक्कमिअ, उन्दुरणामधेएण चरेण अनुसरन्तो, इमंज्जेव्व कुसुमपुरं आगदोत्ति, अज्जचाणक्कस्स णिवेदिदं (३)।

समिद्धा। वअस्स, तधा णाम अमच्चरक्खसो णन्दरज्जपच्चाणअणे किदव्ववसाओ णिक्कमिअ, सम्पदं अकदत्थो पुणावि कधं इमंज्जेव्व कुसुमउरं आअदो (४)?

---

(१) वयस्य, अतिमूर्ख इदानीमसि त्वं, यस्त्वममात्यराक्षसेनाप्यनवगाहितपूर्व्वामार्य्यचाणक्यस्य बुद्धिमवगाहितुमिच्छसि।

(२) वयस्य, अमात्यराक्षस इदानीं कुत्र?

(३) वयस्य, स खलु अमात्यराक्षसस्तस्मिन् सम्भ्रमे वर्द्धमाने, मलयकेतुकटकान्निष्क्रम्य, उन्दुरनामधेयेन चरेणानुगीयमाण, इदमेव कुसुमपुरमागत, इत्यार्य्यचाणक्यस्य निवेदितं।

(४) तथा नामामात्यराक्षसो नन्दराज्यप्रत्यानयने कृतव्यवसायो निष्क्रम्य, साम्प्रतमकृतार्थः पुनरपि कथमिदं कुसुमपुरमागतः?